विटः—(निरूप्य, सहर्षम्) अरे चेडअ, (अङ्गुल्या निर्दिश्य, सहासम्) एसा क्खु णोमालिआ अहं चिरस्स आअदो त्ति कुविदा अवगुण्ठणं करिअ अण्णदो गच्छदि। ता कण्ठे गह्लिअ पसादेमि णं।

(निरूप्य, सहर्षम्) अरे चेट, (अङ्गुल्या निर्दिश्य, सहासम्) एषा खलु नवमालिका अहं चिरस्यागत इति कुपिता ऽवगुण्ठनं कृत्वा ऽन्यतो गच्छति। तत् कण्ठे गृहीत्वा प्रसादयाम्येनाम्।

(सहसोपसृत्य, कण्ठे गृहीत्वा, मुखेन ताम्बूलं दातुमिच्छति)

विदूषकः—(मद्यगन्धं सूचयन्, नासिकां गृहीत्वा, परावृत्तमुखः) अहं एक्काणं महुअराणं मुहादो कहं वि परिब्भट्टो अण्णस्स दुट्ठमहुअरस्स मुहे पडिदो ह्मि।

(मद्यगन्धं सूचयन्, नासिकां गृहीत्वा, परावृत्तमुखः) अहमेकेषां मधुकराणां मुखात् कथमपि परिभ्रष्टो ऽन्यस्य दुष्ट मधुकरस्य मुखे पतितो ऽस्मि।

विटः—कहं कोवेण परम्मुहीभूदा? (विदूषकस्य चरणावात्मनः शिरसि कुर्वन्) पसीद, णोमालिए, पसीद।

कथं कोपेन पराङ्मुखीभूता? (विदूषकस्य चरणावात्मनः शिरसि कुर्वन्) प्रसीद, नवमालिके, प्रसीद।

(ततः प्रविशति चेटी)

चेटी—आणत्तह्मि भट्टिदारिआए मादाए—"हञ्जे णोमालिए, कुसुमाअरुज्जाणं गच्छिअ उज्जाणपालिअं पल्लविअं भणाहि—अज्ज सविसेसं तमालवीहिअं सज्जीकरेहि। मलअवदीसहिदेण जामादुएण एत्थ आअन्तव्वं" त्ति। आणत्ता अ मए पल्लविआ। जाव रअणीविरहुक्कण्ठिअं पिअवल्लहं सेहरअं अण्णेसामि। (दृष्ट्वा) एसो सेहरओ। (सरोषम्) कहं? अण्णं कं पि इत्थिअं पसादेदि!

आज्ञप्ता ऽस्मि भर्तृदारिकाया मात्रा—"हञ्जे नवमालिके, कुसुमाकरोद्यानं गत्वोद्यानपालिकां पल्लविकां भण—अद्य सविशेषं तमालवीथिकां सज्जीकुरु। मलयवतीसहितेन जामात्रा ऽत्रागन्तव्यम्" इति। आज्ञाप्ता च मया पल्लविका। यावद् रजनीविरहोत्कण्ठितं प्रियवल्लभं शेखरकमन्विच्छामि। (दृष्ट्वा) एष शेखरकः। (सरोषम्) कथम्? अन्यां कामपि स्त्रियं प्रसादयति!

---

**Vita**—(*Observing, with delight*) Look, boy, there goes Navamalika (*Pointing with the finger, and laughing*) just the other way, veiling her face in anger at my coming late. I shall, therefore, throw my arms around her neck and conciliate her.

**विट**—(देखकर) अरे छोकरे, मैं देर से पहुँचा हूँ इसीलिये वह देखो (उँगली से निर्देश करके, ठहाका मारकर) नवमालिका रोष से घूँघट निकालकर दूसरी ही ओर चली जा रही है। कोई बात नहीं, मैं गले से लगाकर इसे मनाता हूँ।

(सहसा पास जाकर, आलिङ्गन करके, अपने मुँह से पान देने लगता है)

**विदूषक**—(मदिरा की गन्ध सूचित करता हुआ, नाक बन्द करके, मुँह फेर-कर) उधर से जैसे-कैसे एक प्रकार के मधुपों के चुंगल से छुटकर इधर दूसरे मधुपान करने वाले (गुंडे) के हाथ आ फँसा हूँ!

**विट**—क्या बात है, क्रोध से मुँह ही फेर लिया? (विदूषक के चरणों को पकड़कर अपने सिर पर रखते हुए) क्षमा करो, नवमालिका, क्षमा करो।

(चेटी का प्रवेश)

**चेटी**—मुझे बीबी की माता जी ने कहा है—"नवमालिका, कुसुमाकर उद्यान में जाकर पल्लविका मालिन से कहो कि आज तमालों की अन्तर्वीथी को विशेष रूप से सजाए। मलयवती के साथ जँवाई ने आज उधर ही टहलने जाना है।" मैंने पल्लविका को आदेश पहुँचा दिया है। अब जाकर रातभर के विरह से विह्वल अपने प्रिय साजन शेखरक को ढूँढती हूँ। (देखकर) लो, शेखरक तो यह रहा। (क्रोध से) हैं? यह तो किसी दूसरी ही स्त्री को मना रहा है!

---

[*Suddenly approaching, throwing arms around the neck, tries to offer a betel-leaf with lips*]

**Jester**—(*Indicating smell of liquor, stopping his nose and turning away his face*) Having escaped with great difficulty from the clutches of one sort of stingers, I have fallen into the clutches of a yet worse stinker!

**Vita**—Why, my love, why—turning thy face away in anger? (*Supplicates by placing* JESTER'S *feet on his head*) Forgive me, Navamalika, forgive me.

[*Enter* MAIDSERVANT]

**Maid**—I have been ordered by the mother of the Princess, saying, "Maid Navamalika, go to the Kusumakara garden and tell the keeper Pallavika to decorate the Tamala avenue exquisitely well to-day, for my son-in-law will go there with Malayavati." I have conveyed the orders to Pallavika. Now, I shall go and seek Sekharaka, my darling, who must be feeling disconsolate for having had to pass the night withont me. (*Seeing*) Here is Sekharaka. (*Angrily*) What? he is conciliating another lady-love!

विटः—

हरिहरपिदामहाणं पि गव्विदो जो ण जाणइ णमिदुं ।
सो सेहरओ चलणेसु तुज्झ णोमालिए ! पडइ ॥३॥

हरिहरपितामहानामपि गर्वितो यो न जानाति नन्तुम् ।
स शेखरकश्चरणयोस्तव नवमालिके ! पतति ॥३॥

विदूषकः—दासीएपुत्त, मत्तपालअ ! कुदो एत्थ णोमालिआ ?

दास्याःपुत्र, मत्तपालक ! कुतो ऽत्र नवमालिका ?

चेटी—(निरूप्य, सस्मितम्) कहं अहं ति करिअ मदपरवसेण सेहरएण अज्जो अत्तेओ पसादीअदि ? जाव अलीअकोवं करिअ दुवे वि एदे परिहसिस्सं ।

(निरूप्य, सस्मितम्) कथमहमिति कृत्वा मदपरवशेन शेखरकेण आर्य आत्रेयः प्रसाद्यते ? यावदलीककोपं कृत्वा द्वावप्येतौ परिहसिष्यामि ।

चेटः—(शेखरकं हस्तेन चालयन्) भट्टक, मुञ्च, मुञ्च एदं । ण होइ एसा णोमा लिआ । एसा क्खु णोमालिआ लोशलत्तेंहिं णअणेहिं पेक्खन्ती आअदा ।

(शेखरकं हस्तेन चालयन्) भट्टक, मुञ्च, मुञ्चैनम् । न भवत्येषा नवमालिका । एषा खलु नवमालिका रोषरक्ताभ्यां नयनाभ्यां पश्यन्त्यागता ।

चेटी—(उपसृत्य) सेअरअ, का ण क्खु एसा पसादीअदि ?

(उपसृत्य) शेखरक, का नु खल्वेषा प्रसाद्यते !

विदूषकः—(अवगुण्ठनमपनीय) अहं मन्दभाआए पुत्तो !

(अवगुण्ठनमपनीय) अहं मन्दभाग्यायाः पुत्रः !

विटः—(विदूषकं निरूप्य) अरे कपिलमक्कडअ, तुवं पि मं सेहरअं परिहससि ! अरे चेडअ, गह्ण इमं, जाव णोमालिअं पसादेमि ।

(विदूषकं निरूप्य) अरे कपिलमर्कटक, त्वमपि मां शेखरकं परिहससि ! अरे चेट, गृहाणेमम् , यावन्नवमालिकां प्रसादयामि ।

चेटः—जं भट्टओ आणवेदि ।

यद्भट्टक आज्ञापयति ।

विटः—(विदूषकं विमुच्य, चेटयाः पादयोः पतन्) पसीद, णोमालिए, पसीद ।

(विदूषकं विमुच्य, चेटयाः पादयोः पतन्) प्रसीद, नवमालिके, प्रसीद ।

---

**Vita**—

*That same Sekharaka who, out of pride, knows not to humble himself before even Brahma, Vishnu and Mahesa, is now falling at thy feet, my dear Navamalika !* (3)

विट—

*जो शेखरक इतना स्वाभिमानी है कि वह—क्या ब्रह्मा, क्या विष्णु और क्या महेश, किसीके भी आगे झुकना नहीं जानता—वही, हे नवमालिका, तेरे चरणों में अपना सिर दे रहा है ! (३)*

विदूषक—भड़ुए पियक्कड़ ! यहाँ नवमालिका कहाँ ?

चेटी—(देखकर, मुस्कराती हुई) ओहो, यह तो मदिरा की झोंक में शेखरक जी भाई आत्रेय को नवमालिका समझकर उसकी आराधना कर रहे हैं। अस्तु, मैं भी झूठ-मूठ क्रोध (का अभिनय) करती हुई इन दोनों को ही बनाती हूँ।

चेट—(शेखरक को हाथ से झँझोड़कर) अजी शाह जी, छोड़ो इसे। यह नवमालिका नहीं है। नवमालिका तो क्रोध से आँखें लाल किये घूरती हुई यह आ रही है।

चेटी—(पास आकर) शेखरक, यह किसको मना रहे हो ?

विदूषक—(घूँघट उतारकर) मुझे,—अभागी माँ के बेटे को !

विट—(विदूषक को देखकर) वाह रे लाल बन्दर, तुझे भी मेरी—शेखरक की, हँसी उड़ाने का साहस ! अरे छोकरे, पकड़ ले इसे, इधर जब तक मैं नवमालिका को मनाता हूँ।

चेट—जो शाह जी की आज्ञा।

विट—(विदूषक को छोड़, चेटी के चरणों में गिरता हुआ) नवमालिका, मुझे क्षमा कर दो।

---

**Jester**—You whoreson, you dog of a drunkard! where is Navamalika here ?

**Maid**—(*Observing, with a smile*) What a fun! here is Sekharaka. fuddled with drink, propitiating brother Atreya mistaking him for me. Now, I shall feign anger and make a fool of them both.

**Servant**—(*Shaking* SEKHARAKA *with his hand*) Master, leave him, leave him. This is not Navamalika. There comes she looking at you with eyes red with anger.

**Maid**—(*Approaching*) Sekharaka, who is this gal with whom you are spooning ?

**Jester**—(*Putting off the veil*) It's me, the son of an unfortunate mother !

**Vita**—(*Seeing the* JESTER) O, you red monkey, you dare jest with me, Sekharaka ! Boy, hold him fast till I have appeased Navamalika.

**Servant**—As my master commands.

**Vita**—(*Leaving off the* JESTER, *falling at* MAID's *feet*) Forgive me, Navamalika, forgive me.

विदूषकः—एसो मे अपक्कमिदुं अवसरो। (पलायितुमीहते)

एष मे अपक्रमितुमवसरः। (पलायितुमीहते)

चेटः—(विदूषकं यज्ञोपवीते गृह्णाति। यज्ञोपवीतं त्रुट्यति) कहिं कहिं कपिलमक्कडअ, पलाअसि ?

(विदूषकं यज्ञोपवीते गृह्णाति। यज्ञोपवीतं त्रुट्यति) कुत्र कुत्र कपिलमर्कटक, पलायसे ?

(तदुत्तरीयेण गले बद्ध्वाकर्षति)

विदूषकः—होदि णोमालिए, पसीद। मोआवेहि मं।

भवति नवमालिके, प्रसीद। मोचय माम्।

चेटी—(विहस्य) जदि भूमिए सीसं णिवेसिअ पादेसु मे पडसि !

(विहस्य) यदि भूम्यां शीर्षं निवेश्य पादयोर्मे पतसि !

विदूषकः—(सरोषम्) कहं राअमित्तं भविअ दासीएधीदे, पादेसु दे पडिस्सं ?

(सरोषम्) कथं राजमित्रं भूत्वा दास्याःपुत्रि, पादयोस्ते पतिष्यामि ?

चेटी—(अङ्गुल्या तर्जयन्ती, सस्मितम्) दाणिं तुमं पाडइस्सं। सेहरअ, उट्ठेहि, उट्ठेहि। पसण्णा क्खु अहं। (कण्ठे गृह्णाति) एसो जामादुअस्स पिअवअस्सो तुए खलीकिदो। एदं सुणिअ कदाइ भट्टारओ मित्तावसू कुप्पे। ता आदरेण सम्माणेहि णं।

(अङ्गुल्या तर्जयन्ती, सस्मितम्) इदानीं त्वां पातयिष्यामि। शेखरक, उत्तिष्ठोत्तिष्ठ। प्रसन्ना खल्वहम्। (कण्ठे गृह्णाति) एष जामातुः प्रियवयस्यस्त्वया खलीकृतः। एतच्छ्रुत्वा कदाचिद्भट्टारको मित्रावसुः कुप्येत्। तदादरेण संमानयैनम्।

विटः—जं णोमालिआ आणवेदि। (विदूषकं कण्ठे गृहीत्वा) अज्ज, तुमं पिअसम्बन्धिअ त्ति करिअ अवहसिदो। (घूर्णयन्) किं सच्चं एव्व सेहरओ मत्तो ? किदो परिहासो। (उत्तरीयं वर्तुलीकृत्यासनं ददाति) इह उवविसदु संबन्धिओ।

यन्नवमालिकाज्ञापयति। (विदूषकं कण्ठे गृहीत्वा) आर्य, त्वं प्रियसंबन्धिक इति कृत्वा ऽपहसितः। (घूर्णयन्) किं सत्यमेव शेखरको मत्तः ? कृतः परिहासः। (उत्तरीयं वर्तुलीकृत्यासनं ददाति) इहोपविशतु संबन्धिकः।

---

**Jester**—It's time I should slip away. (*Tries to run away*)

**Servant**—(*Seizes the* Jester *by his sacred thread, the thread snaps*) Whitherto, my red monkey, whitherto art thou fleeing ? (*Tightening his scarf round his neck, drags him*)

**Jester**—Sister Navamalika, have mercy on me and get me released.

विदूषक—अब अवसर है मेरे भाग निकलने का। (भागने की करता है)

चेट—(विदूषक को यज्ञोपवीत से पकड़ लेता है। यज्ञोपवीत टूट जाता है) किधर भागने लगा है, रे लाल बन्दर ?

(उसी के दुपट्टे से उसका गला फाँसकर खेंचता है)

विदूषक—बहिन नवमालिका, तुम ही कृपा करो, मेरी जान छुड़ाओ।

चेटी—(हँसती हुई) हाँ, बस यदि तुम भूमि पर सिर रखकर मेरे चरणों पर गिरो तब !

विदूषक—(रोष से) हुँ, मैं राजा का प्रिय वयस्य होकर तुझ चुड़ैल के चरणों में माथा टेकूँ ?

चेटी—(अंगुली से धमकाती हुई, मुस्कराकर) अभी टिकवाकर छोड़ूँगी। उठ शेखरक, उठ। मैं तेरे से प्रसन्न हो गई। (गले लगाती है) तूने हमारे जँवाई के लँगोटिये का अपमान किया हैं। कहीं यह बात स्वामी मित्रावसु ने सुन ली तो वे तुझपर क्रुद्ध होंगे। अब अनुनय-विनय से, किसी प्रकार इन्हें मना लो।

विट—जो नवमालिका जी की आज्ञा। (विदूषक को गले से लगाते हुए) भाई, आप हमारे सम्बन्धी हैं, इसलिये ठठोली की थी। (मद से झूमता हुआ) अरे, क्या सचमुच शेखरक नशे में है ? अरे छोड़ो, हो लिया ठट्ठा। (दुपट्टे को लपेटकर उसका आसन बनाकर देता है) समधी जी, इस पर बैठिये।

---

**Maid**—(*Laughing*) Yes, I will, only if you place your head on the ground and fall at my feet !

**Jester**—(*Angrily*) I, a friend of the Prince, and should fall at the feet of a hussy like thee ?

**Maid**—(*Threatening with her finger and smiling*). Presently I shall make you fall. Sekharaka, come, get up. I am reconciled with you. (*Throws arms round his neck*) It is the dear friend of the Prince, our son-in-law's, you have maltreated. Should Mitravasu, our master, hear of it, and get angry, then ? You should therefore make up with him by paying proper respects to him.

**Vita**—As my Navamalika commands. (*Throwing arms round the neck of the* Jester) Sir, I made fun of you because I knew that you belonged to our dear in-laws. (*Reeling*) Do you think that Sekharaka is really drunk ? No more jesting now. (*Makes a coil of his scarf and offers it as a seat*) Let our dear relative take his seat here.

**विदूषकः**—**दिट्ठिआ अवअतो विअ से मदवेओ ।** (उपविशति )

दिष्ट्या ऽपगत इवास्य मदवेगः । (उपविशति )

**विटः**—**णोमालिए, उपविस तुमं एदस्स पस्सदो, जेण दुवे वि तुह्मे समं सम्माणेमि ।**

नवमालिके, उपविश त्वमस्य पार्श्वतः, येन द्वावपि युवां समं संमानयामि ।

(चेटी विहस्योपविशति)

**विटः**—**चेडअ, सुपूरिदं क्खु एदं चसअं करेहि अच्छसुराए ।**

चेटक, सुपूरितं खल्वेतच्चषकं कुर्वच्छसुरया ।

(चेटः चषकमुन्नयन् पूरणं नाट्येन करोति )

**विटः**—(स्वशिरःशेखरात् पुष्पाणि गृहीत्वा, चषके विन्यस्य, जानुभ्यां पतित्वा, नवमालिकाया उपनयन्) **णोमालिए, पिबिअ चोक्खिअ देहि एदं एदस्स ।**

(स्वशिरःशेखरात् पुष्पाणि गृहीत्वा, चषके विन्यस्य, जानुभ्यां पतित्वा, नवमालिकाया उपनयन्) नवमालिके, पीत्वा चोक्षित्वा देह्येतदेतस्मै ।

**चेटी**—(सस्मितम्) **जं सेहरओ आणवेदि ।** (तथा करोति)

(सस्मितम्) यच्छेखरक आज्ञापयति । (तथा करोति )

**विटः**—(विदूषकस्य चषकमुपनयन्) **एदं णोमालिआमुहसंसग्गवड्ढिअरसं सेहरआदो अण्णेण केण वि अणास्सादिअपुव्वं । ता पिब एदं । किं दे अदो वरं संमाणं करेमि ?**

(विदूषकस्य चषकमुपनयन्) एतन्नवकालिकामुखसंसर्गवर्धितरसं शेखरकादन्येन केनाप्यनास्वादितपूर्वम् । तत् पिबैतत् । किं ते ऽतः परं संमानं करोमि ।

**विदूषकः**—(सविलक्षस्मितं कृत्वा) **सेहरअ, बम्हणो क्खु अहं ।**

(सविलक्षस्मितं कृत्वा) शेखरक, ब्राह्मणः खल्वहम् ।

**विटः**—**जइ तुमं बम्हणो, कहिं दे बम्हसुत्तं ?**

यदि त्वं ब्राह्मणः, क्व ते ब्रह्मसूत्रम् ?

**विदूषकः**—**तं क्खु इमिणा चेडेण आअड्ढिअमाणं छिण्णं ।**

तत् खल्वमुना चेटेनाकृष्यमाणं छिन्नम् ।

---

**Jester**—Luckily, the effect of liquor on him has somewhat subsided. (*Takes his seat*)

**Vita**—Navamalika, you come and sit down beside him, so that I may propitiate you both together,

विदूषक—सौभाग्य से अब इसका मद उतर-सा गया है। (बैठ जाता है)

विट—नवमालिका, आ ना, तू भी इसके पास बैठ जा, जिससे मैं तुम दोनों को एकसाथ सत्कार-पूर्वक मना सकूँ।

(चेटी हँसती हुई बैठ जाती है)

विट—छोकरे, इस प्याले को बढ़िया मदिरा से भर लाओ।

(चेट प्याला ऊँचा करके उसे भरने का अभिनय करता है)

विट—(अपने सेहरे से फूल लेकर, प्याले में डालकर, घुटनों पर गिरकर, नवमालिका को प्रस्तुत करते हुए) लो, नवमालिका, इसे पीकर सुच्चा करके इसको दे दो।

चेटी—(मुस्कराती हुई) जो शेखरक जी की आज्ञा। (वैसे ही करती है)

विट—(विदूषक को प्याला उपस्थित करते हुए) लो पियो महाराज, नवमालिका के होठों से छुए इस प्याले में निराला ही रस है जिसे आज तक शेखरक के अतिरिक्त किसी और ने नहीं चखा। इससे बढ़कर मैं आपका और क्या संम्मान कर सकता हूँ ?

विदूषक—(खिसियानी मुस्कराहट से) शेखरक, मैं तो ब्राह्मण हूँ।

विट—ब्राह्मण हैं, तो आपका ब्रह्म-सूत्र कहाँ है ?

विदूषक—वह तो इस छोकरे ने खेंचकर तोड़ दिया।

---

[MAID *sits down with a laugh*]

**Vita**—Boy, fill this peg to the brim with crystal wine.

[SERVANT *raises the peg, acts as if filling it*]

**Vita**—(*Taking flowers from the wreath on his head, dropping them into the peg and kneeling down, offers it to* NAVAMALIKA) Navamalika, make it purer by tasting it (*i.e.* with the touch of your lips) and offer it to him.

**Maid**—(*Smiling*) Just as my Sekharaka says. (*Does so*)

**Vita**—(*Offering the peg to the* JESTER) Here is a drink, all the sweeter by virtue of its touch with Navamalika's lips, and which none else but Sekharaka has ever tasted before. Just have a sip of it. What greater honour than this could I do to you ?

**Jester**—(*With an embarrassed smile*) Remember, Sekharaka, I am a Brahmin.

**Vita**—If you are a Brahmin, where is then your holy thread ?

**Jester**—But that had snapped when the servant pulled at it.

चेटी—(विहस्य) जइ एव्वं, वेदक्खराणि पि कदिइ उदाहर ।

(विहस्य) यद्येवं, वेदाक्षराण्यपि कतिचिदुदाहर ।

विदूषकः—भोदि, सीहुगन्धेण मे वेदक्खराणि णट्ठाणि । अहव, किं मम भोदिए समं विवादेण ? एसो बम्हणो पादेसु दे पडइ । (पादयोः पतितुमिच्छति)

भवति, सीधुगन्धेन मम वेदाक्षराणि नष्टानि । अथवा, किं मम भवत्या समं विवादेन ? एष ब्राह्मणः पादयोस्ते पतति । (पादयोः पतितुमिच्छति)

चेटी—(विहस्य, हस्ताभ्यां निवार्य) अज्ज, मा मा एव्वं करेहि । सेहरअ, सच्चं बम्हणो क्खु एसो । (विदूषकस्य पादयोः पतति) अज्ज, तुए ण कुविदव्वं । सम्बन्धिआणुरूवो परिहासो किदो । सेहरअ, तुमं पि इमं पसादेहि ।

(विहस्य, हस्ताभ्यां निवार्य) आर्य, मा मैवं कुरु । शेखरक, सत्यं ब्राह्मणः खल्वेषः । (विदूषकस्य पादयोः पतति) आर्य, त्वया न कोपितव्यम् । संबन्धिकानुरूपः परिहासः कृतः । शेखरक, त्वमपीमं प्रसादय ।

विटः—अहं पि इमं पसादेमि । (विदूषकस्य पादयोर्निपत्य) मरिसेदु, मरिसेदु अज्जो, जं मए मदपरवसेण अवरद्धं, जेण अहं णोमालिआए सह आपाणअं गमिस्सं ।

अहमपीमं प्रसादयामि । (विदूषकस्य पादयोर्निपत्य) मर्षयतु, मर्षयत्वार्यः, यन्मया मदपरवशेनापराद्धं, येनाहं नवमालिकया सहापानकं गमिष्यामि ।

विदूषकः—मरिसिदं मए । गच्छ । जाव अहं पि वअस्सं पेक्खामि ।

मर्षितं मया । गच्छ । यावदहमपि वयस्यं प्रेक्षे ।

विटः—अज्ज, तह ।

आर्य, तथा । (निष्क्रान्तो नवमालिकया विटश्चेटश्च)

विदूषकः—अदिक्कन्दो क्खु बम्हणस्स अआलमिच्चू । ता अहं पि मत्तवालअजणसंसग्गदूसिदो इह दिग्घिआअं ह्लाइस्सं । (तथा करोति । पुरोऽवलोक्य) एसो क्खु पिअवअस्सो रूविणीं विअ वरलच्छि मलअवदिं ओलम्बिअ इदो एव्व आअच्छदि । ता इह एव्व चिट्ठिस्सं । (स्थितः)

अतिक्रान्तः खलु ब्राह्मणस्याकालमृत्युः । तदहमपि मत्तबालकजनसंसर्गदूषित इह दीर्घिकायां स्नास्यामि ।(तथा करोति । पुरोऽवलोक्य) एष खलु प्रियवयस्यो रूपिणीमिव वरलक्ष्मीं मलयवतीमवलम्ब्येत एवागच्छति । तदिहैव स्थास्यामि । (स्थितः)

(ततः प्रविशति जीमूतवाहनो मलयवत्या, विभवतश्च परिवारः)

---

**Maid**—(*Laughing*) If so, then please repeat at least some Vedic words.

**Jester**—Madam, even my Vedic words have been spirited away by the smell of the spirit. Or, what is the good of wrangling with you ? Here, this Brahmin falls at your feet. (*Is about to fall at her feet*)

चेटी—(हँसकर) अच्छा, ऐसी बात है तो फिर कुछ वेद-वाक्य ही उच्चारण कर दीजिये।

विदूषक—देवि, मेरे वेद-वाक्य तो इस मदिरा की गन्ध से ही उड़ गए। अथवा, आपसे वितण्डा करने से क्या लाभ? लीजिये यह ब्राह्मण आपके पैरों पड़ता है। (चरणों में गिरने लगता है)

चेटी—(हँसकर, हाथों से रोकती हुई)महाराज, आप ऐसा मत करें। शेखरक, ये सचमुच ब्राह्मण हैं। (विदूषक के चरणों पर गिरती है) भाई, रुष्ट न होना। समधियों के अनुरूप ही परिहास किया है। आओ शेखरक, तुम भी इनसे क्षमा माँगो।

विट—हाँ, मैं भी इनसे क्षमा माँगता हूँ (विदूषक के चरणों पर गिरकर) महाराज, मदिरा के आवेग में मुझसे जो कुछ भूल-चूक हो गई हो, उसे आप क्षमा कर दें तो मैं नवमालिका के साथ मदिरा-मण्डली को जाने वाला बनूँ।

विदूषक—मैंने क्षमाकर दिया। जाओ। तब तक मैं भी अपने मित्र को ढूँढूँ।

विट—अच्छा, महाराज, ठीक है।

(नवमालिका के साथ विट, और चेट का निष्क्रमण)

विदूषक—अकाल मृत्यु तो ब्राह्मण के सिर से टल गई। अब मैं भी इन शराबी छोकरों के संपर्क से अपवित्र होने से इस सरोवर में स्नान कर लूँ। (स्नान करता है, सामने देखकर) लो, मेरा प्रिय वयस्य भी साक्षात् सौन्दर्य की मूर्ति (नई दुलहन) मलयवती को साथ लेकर इधर ही चला आ रहा है। सो, मैं यहीं ठहरूँ। (वहीं ठहरता है)

(मलयवती के साथ जीमूतवाहन तथा पदानुसार परिजनों का प्रवेश)

---

**Maid**—(*Laughing and preventing with both hands*) No sir, don't, don't do this. Sekharaka, in sooth, he is a Brahmin. (*Falls at* Jester's *feet*) You won't be cross, sir, I hope. For, the joke was quite natural as should have suited the relations-in-law. Sekharaka, you should also propitiate him.

**Vita**—Yes, I will. (*Falling at* Jester's *feet*) Pray, sir, excuse me for my misbehaviour under the influence of liquor, so that I may be able to accompany Navamalika to the drinking party with an easy conscience.

**Jester**—You are forgiven. Now you can go, and I too shall look for my friend.

**Vita**—Thank you, sir.

[*Exeunt* Vita *with* Navamalika, *and the* Servant]

**Jester**—Thank God, the Brahmin has been spared an untimely death. Now, I shall take a bath in this lake and wash the taint of my contact with tipsy striplings. (*Does so. Looking in front*) Good me, here comes my friend in this very direction, holding the hand of Malayavati as if she were Grace of Nuptials incarnate. So, I had rather stay here. (*Remains where he is*)

[*Enter* Jimutavahana *with* Malayavati *and, cortege in order of rank*]

जीमूतवाहनः—

दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते ।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
जाता वामतयैव मे ऽद्य सुतरां प्रीत्यै नवोढा प्रिया ॥ ४ ॥

(मलयवतीमवलोक्य) प्रिये मलयवति !—

हुंकारं ददता मया प्रतिवचो यन्मौनमासेवितं
यद्दावानलदीप्तिभिस्तनुरियं चन्द्रातपैस्तापिता ।
ध्यातं यच्च बहून्यनन्यमनसा नक्तंदिनानि प्रिये
तस्यैतत्तपसः फलं मुखमिदं पश्यामि यत्ते ऽधुना ॥ ५ ॥

मलयवती—(अपवार्य) हञ्जे, ण केवलं दंसणीओ, पिअं पि भणिदुं जाणादि ।
(अपवार्य) हञ्जे, न केवलं दर्शनीयः, प्रियमपि भणितुं जानाति ।

चेटी—(विहस्य) अइ पडिपक्खवादिणि, सच्चं एव्व एदं । किं एत्थ पिअवअणं ?
(विहस्य) अयि प्रतिपक्षवादिनि, सत्यमेवतत् । किमत्र प्रियवचनम् ?

जीमूतवाहनः—चतुरिके, आदेशय कुसुमाकरोद्यानस्य मार्गम् ।

चेटी—एदु एदु भट्टिदारओ ।
एत्वेतु भर्तृदारकः ।

जीमूतवाहनः—( परिक्रामन्, मलयवतीं निर्दिश्य ) स्वैरं-स्वैरम् आगच्छतु भवती ।—

---

**Jimutavahana**—

*When I look at her, she bends her gaze down. When I address her, she only keeps silent. On the bed she sits with her face turned to the other side. When forcibly embraced she trembles. And when her friends leave our bed-room, she too wants to go with them. This new bride of mine has grown all the dearer to me these days by her very contrariness.* (4)

(*Looking at* Malayavati) Malayavati, darling !—

*That I have been observing silence by replying to all questions with a mere 'hum', that I have been exposing my body to the*

जीमूतवाहन—

देखो, तो आँखें नीचे कर लेती है। बुलाओ, तो कोई उत्तर नहीं देती। बिछौने पर मुँह फेर कर बैठ जाती है। बलात् आलिङ्गन करने पर काँपने लगती है। जब उसकी सखियाँ (उसे छोड़कर) सुहाग-गृह से बाहर निकलने लगती हैं तब स्वयं भी उनके साथ जाना चाहती है। किन्तु इस समय अपनी इन विपरीत चेष्टाओं से ही मेरी नई दुलहन मुझे और भी प्यारी लगती है। (४)

(मलयवती की ओर देखकर) **प्यारी मलयवती !—**

प्रत्येक बात के उत्तर में जो मैं आज तक केवल "हुँ" कहकर मौन रहता रहा, और दावाग्नि के समान असह्य चाँद की चाँदनी में अपनी देह को तपाता रहा और इतनी देर रात-दिन अनन्य-भाव से तेरे ध्यान में लीन रहा—यह सब उसी तपस्या का फल है कि, हे सुमुखि, आज मुझे तेरा यह मुखड़ा देखने का सौभाग्य प्राप्त हुआ है। (५)

मलयवती—(एक ओर) **अरी, केवल देखने में ही सुन्दर हों—सो नहीं, ये तो मीठी-मीठी बातें कहना भी जानते हैं।**

**चेटी—**(हँसकर) **अरी, सदा उलटी बात (अर्थात् "ना-ना") करने वाली यह सब सच ही तो है। इसमें चाटु की कौन सी बात है ?**

जीमूतवाहन—**चतुरिका, हमें कुसुमाकर उद्यान की ओर ले चलो।**

चेटी—**आइये महाराज।**

जीमूतवाहन—(जाते हुए, मलयवती की ओर निर्देश करके) **आओ, बेखटके चली आओ, मलया।**

---

*torment of the moonlight blazing like forest-fire, and that many a day and night I have been passing in contemplation of none else but thee—It is the fruit of all this hard penance, my love, that I have been able to see this, thy face at last!* (5)

**Malayavati**—(*Aside*) My girl, not only is he handsome, but knows the use of unction too.

**Maid**—(*Laughing*) O, my captious lady, it is the simple truth. What unction is there in it ?

**Jimutavahana**—Chaturika, show us the way to Kusumakara garden.

**Maid**—Come, come, my lord.

**Jimutavahana**—(*Going, addressing* MALAYAVATI) Take care, my dear, come ye easy. For,—

खेदाय स्तनभार एव किमु ते मध्यस्य हारो ऽपरस्
ताम्यत्यूरुयुगं नितम्बभरतः काञ्च्या ऽनया किं पुनः ।
शक्तिः पादयुगस्य नोरुयुगलं वोढुं कुतो नूपुरे
स्वाङ्गैरेव विभूषितासि वहसि क्लेशाय किं मण्डनम् ॥ ६ ॥

चेटी—एदं कुसुमाअरुज्जाणं । पविसदु भट्टिदारओ ।

एतत् कुसुमाकरोद्यानम् । प्रविशतु भर्तृदारकः ।

(सर्वे प्रविशन्ति)

जीमूतवाहनः—(प्रविश्य) अहो, कुसुमाकरोद्यानस्य श्रीः ! इह हि,—

निष्यन्दश्चन्दनानां शिशिरयति लतामण्डपे कुट्टिमान्तान्
आराद्धारागृहाणां ध्वनिमनु कुरुते ताण्डवं नीलकण्ठः ।
यन्त्रोन्मुक्तश्च वेगाच्चलति विटपिनां पूरयन्नालवालान्
आपातोत्पीड-हेला-हृत-कुसुम-रजः-पिञ्जरो ऽयं जलौघः ॥७॥

अपि च,—

अमी गीतारम्भैर् मुखरितलतामण्डपभुवः
परागैः पुष्पाणां प्रकटपटवासव्यतिकराः ।
पिबन्तः पर्याप्तं सह सहचरीभिर्मधुरसं
समन्तादापानोत्सवमनुभवन्तीह मधुपाः ॥ ८ ॥

विदूषकः—(उपसृत्य) जेदु जेदु भवं । सोत्थि भोदीए ।

(उपसृत्य) जयतु जयतु भवान् । स्वस्ति भवत्यै ।

---

*The weight of thy swelling breasts was enough for thy slender waist to bear, then why this superfluous necklace? Thy thighs are already sagging under thy massive hips, why need this girdle? Thy feet can hardly carry thy plump thighs, how could they these additional anklets? Thy limbs are themselves more than ornaments for thee, then why bear an extra burden of trinkets to irk thyself?* (6)

**Maid**—We have arrived at the Kusumakara garden. Let my lord enter it.

[*All enter*]

**Jimutavahana**—(*Entering*) Oh, the loveliness of the Kusumakara garden! For here,—

तेरी पतली कमर को थकाने के लिये वक्षःस्थल का भार ही पर्याप्त था, उसपर यह हार और लादने की क्या आवश्यकता थी? जंघाएँ नितम्ब भार से ही झुकती जा रही हैं, उसपर यह तड़ागी क्यों? चरणों में तो जंघाओं के बोझ को भी सहन करने की शक्ति नहीं, तिसपर ये नूपुर? तेरे अङ्गों का सौन्दर्य ही तुझे आभूषित कर रहा है, तो फिर यह गहनों का वृथा-भार क्यों उठा रखा है? (६)

**चेटी—लीजिये महाराज, उद्यान आ गया। चलिये, अन्दर चलिये।**

(सभी अन्दर जाते हैं)

**जीमूतवाहन—**(प्रवेश करके) **कुसुमाकर उद्यान की शोभा भी क्या न्यारी है! देखो ना—**

चन्दन वृक्षों का टपकता हुआ रस लता-मण्डप की पक्की भूमि के छोरों को ठण्डा कर रहा है। ऊँचाई से गिरते हुए झरनों की (गंभीर) ध्वनि की ताल पर (उसे घन-गर्जन समझते हुए) मोर नाच रहा है। रहट से निकली हुई जल-धारा अपने प्रवाह के वेग से सुगमता के साथ बहाकर ले जाए हुए पुष्प-पराग से पीतवर्ण होती हुई और वृक्षों के थावलों को भरती हुई किस तेज़ी से बह रही है! (७)

**अपि च—**

अपनी गीतमय गुञ्जारों से सारे लता-मण्डप को गुञ्जायमान करते हुए, और पुष्प-धूलि से ही मानों अपने शरीर में सुगन्धित अङ्ग-राग लगाए अपनी सहचरियों (भ्रमरियों) के साथ चारों ओर जहाँ-तहाँ मधुपान का भरपूर रस लूटते हुए ये भँवरे यहाँ मानों मदिरा-पानोत्सव मना रहे हैं (जैसे मानों मदिरा पीने वाले अपनी प्रियतमाओं को संग लिये शरीर में पुष्पों की सुगन्धि लगाए, गीत गा-गाकर मदिरा पीने का आनन्द लूट रहे हों)। (८)

**विदूषक—**(पास जाकर) **जय हो, महाराज, की जय हो। देवी जी का कल्याण हो!**

---

*The dripping sap of the sandal trees looks the fringes of the floor of the bower. Yonder, the peacock is seen dancing to the tune of the murmuring waterfalls, and the volume of water, released by the wheel and made yellowish by the pollen of flowers swept by the rush of its current, flows rapidly, filling on its way the basins of the trees.* (7)

And here—

*The bees, making the bowers resonant with their humming songs, wafting a blend of perfumes from the pollen of flowers, and drinking to their fill the honey-mead in company of their mates, seem to be enjoying a regular carouse all around.* (8)

**Jester**—(*Approaching*) Hail, hail to your honour. My well-wishes to you, madam.

जीमूतवाहनः—वयस्य, चिरादागतो ऽसि !

विदूषकः—भो वअस्स, लहु एव्व आअदो । किन्दु इअन्तं कालं विवाहमङ्गलुस्सवमिलिदसिद्धविज्जाहरापाणदंसणकोदूहलेण परिब्भमन्तो ण लक्खिदो । ता पिअवअस्सो वि दाव एदं पेक्खदु ।

भो वयस्य, लघ्वेवागतः । किन्तु इयन्तं कालं विवाहमङ्गलोत्सवमिलितसिद्धविद्याधरापानदर्शनकौतूहलेन परिभ्रमन् न लक्षितः । तत् प्रियवयस्यो ऽपि तावदेतत् प्रेक्षताम् ।

जीमूतवाहनः—यथाह भवान् । (सहर्षं परितः पश्यन्) पश्य, पश्य !—

दिग्धाङ्गा हरिचन्दनेन दधतः सन्तानकानां स्रजो
माणिक्याभरणप्रभाव्यतिकरैश् चित्रीकृताच्छांशुकाः ।
सार्धं सिद्धगणैर् मधूनि दयितापीतावशिष्टान्यमी
मिश्रीभूय पिबन्ति चन्दनतरुच्छायासु विद्याधराः ॥९॥

तदेहि, वयमपि तमालवीथिकां गच्छामः ।

(सर्वे परिक्रामन्ति)

विदूषकः—एसा क्खु तमालवीहिआ । एदं चन्दणलदामण्डवं । एदं च सरदादवपरिखेदिअं विअ तत्तहोदीए वदणं लक्खीअदि । ता इह फडिअसिलादले उवविसदु ।

एषा खलु तमालवीथिका । एतच्चन्दनलतामण्डपम् । एतच्च शरदातपपरिखेदितमिव तत्रभवत्या वदनं लक्ष्यते । तदिह स्फटिकशिलातले उपविशतु ।

जीमूतवाहनः—वयस्य, सम्यगुपलक्षितम् ।—

एतन्मुखं प्रियायाः शशिनं जित्वा कपोलयोः कान्त्या ।
तापाभिताम्रम् अधुना कमलं ध्रुवम् ईहते जेतुम् ॥१०॥

(मलयवतीं हस्ते गृहीत्वा) प्रिये, इहोपविशामः ।

(सर्वे उपविशन्ति )

---

**Jimutavahana**—You have been late in coming, my friend.

**Jester**—No, my friend, I came quite early. But you could not find me here because I was busy strolling round, out of curiosity, to see the drinking bouts of Siddhas and Vidyadharas assembled on the auspicious occasion of your wedding. My friend may also come and have a look at them.

**Jimutavahana**—As you like it. (*Looking all arouud, joyfully*) Look, Look !—

जीमूतवाहन—बड़े विलम्ब से पहुँचे हो, मित्र !

विदूषक—भाई, मैं तो शीघ्र ही आ गया था, किन्तु इतनी देर इस विवाह के शुभ उत्सव पर सिद्धों और विद्याधरों को मिलकर मदिरा पीते और रंग-रलियाँ मनाते देखने के कुतूहल से घूमता रहा, इसीलिये आपने मुझे नहीं देखा। आइये, आप भी चलकर मौज-मेला देखिये।

जीमूतवाहन—जैसे तुम्हारी इच्छा। (हर्ष से इधर-उधर देखते हुए) अरे!—

*शरीर पर चन्दन का लेप किये, सन्तान-पुष्पों के हार पहने, मणिमय आभूषणों की झिलमिल से भड़कीले वस्त्र धारण किये हुए ये विद्याधर लोग सिद्ध-गणों के साथ मिलकर चन्दन-लता-कुञ्जों की छाया में अपन प्रेयसियों की मुँह-लगी मदिरा पी रहे हैं। (६)*

चलो, हम भी तमाल-वीथी की ओर चलें।

(सब जाते हैं)

विदूषक—यह आ गई तमाल-वीथी और यह रहा चन्दन-लता-मण्डप। भाभी जी, शरद् ऋतु की धूप से तुम्हारा मुख कुछ कुम्हलाया सा दीखता है। इसलिये आप इस स्फटिक-शिला पर बैठ जाएँ।

जीमूतवाहन—मित्र, तूने ठीक पहचाना। सचमुच—

*अपने कपोलों की (स्वाभाविक) कान्ति से चन्द्रमा को परास्त करके अब प्रेयसी का मुख धूप से लाल होकर कमल (की शोभा) को भी जीत लेना चाहता है। (१०)*

(मलयवती का हाथ पकड़कर) आओ, प्रिये, यहाँ बैठें।

(सब बैठ जाते हैं)

---

*The Vidyadharas, with their limbs anointed with sandal-paste, are wearing wreaths of Santanaka flowers and their spotless dresses are iridescent with the flashes of their jewelry. Mixing freely with the Siddhas they are drinking under the shade of sandal trees the wines first tasted by their beloveds. (9)*

Come, let us also go to the Tamala avanue.

[*All go*]

**Jester**—Here is the Tamala avenue. There is the sandal-bower. But I see that the face of her ladyship is a little faded with the heat of the autumn sun. She may sit down (to rest) on this crystal bench.

**Jimutavahana**—Friend, you have observed rightly. For,—

*The face of my darling, outshining the moon by the fairness of its cheeks, now glowing red with oppressive heat, I am sure, is out to put the red lotus to shame. (10)*

(*Holding* MALAYAVATI *by the hand*) Let us sit here, my dear.

[*All sit down*]

जीमूतवाहनः—(मुखमुन्नमय्य, पश्यन्) प्रिये, वृथैव त्वमस्माभिः कुसुमाकरोद्यानदर्शनकुतूहलिभिः परिखेदिता। कुतः,—

एतत् ते भ्रूलतोल्लासि पाटलाधरपल्लवम्।
मुखं नन्दनमुद्यानमतो ऽन्यत् केवलं वनम् ॥११॥

चेटी—(सस्मितं, विदूषकं निर्दिश्य) सुदं तुए कहं वण्णिदेत्ति ?

(सस्मितं, विदूषकं निर्दिश्य) श्रुतं त्वया कथं वर्णितेति ?

विदूषकः—(सस्मितम्) चउरिए, मा एव्वं गव्वं उव्वह। अह्माणं पि मज्झे दंसणीओ जणो अत्थि एव्व। केवलं मच्छरेण को वि ण वण्णेदि।

(सस्मितम्) चतुरिके, मैवं गर्वमुद्वह। अस्माकमपि मध्ये दर्शनीयो जनो ऽस्त्येव। केवलं मत्सरेण को ऽपि न वर्णयति।

चेटी—(सस्मितम्) अज्ज, अहं दे वण्णेमि।

(सस्मितम्) आर्य, अहं ते वर्णयामि।

विदूषकः—(सहर्षम्) जीविदह्मि। करेदु होदी पसादं, जेण एसो उण ण भणादि ईदिसो तादिसो मक्कडाआरत्ति।

(सहर्षम्) जीवितो ऽस्मि। करोतु भवती प्रसादं, येनैष पुनर्न भणति ईदृशस्तादृशो मर्कटाकार इति।

चेटी—अज्ज तुवं मए विवाहजागरेण णिज्जाअमाणो णिमीलिअच्छो सोहन्तो दिट्ठो। ता एवं एव्व चिट्ठ।

अद्य त्वं मया विवाहजागरेण निन्द्रायमाणो निमीलिताक्षः शोभमानो दृष्टः। तदेवमेव तिष्ठ।

(विदूषकस्तथा करोति)

चेटी—(आत्मगतम्) जाव णीलीसाराणुआरिणा तमालपल्लवरसेण मुहं से कालीकरिस्सं। (उत्थाय, पल्लवग्रहणं कृत्वा निष्पीडनं च नाटयति)

(आत्मगतम्) यावन्नीलीरसानुकारिणा तमालपल्लवरसेन मुखमस्य कालीकरिष्यामि। (उत्थाय, पल्लवग्रहणं कृत्वा निष्पीडनं च नाटयति)

---

**Jimutavahana**—(*Raising* MALAYAVATI'S *face and looking at it*) Darling, in vain we have troubled thee with our curiosity to see the Kusumakara garden. For, I think—

*Thy face, with eye-brows tremulous like the creepers and petal-red lips vying with the Patala flower, is a real garden, the very Nandana (Eden) on earth, while every garden other than this is a mere forest.* (*11*)

जीमूतवाहन--(मलयवती की ठोड़ी ऊपर उठाकर, देखते हुए) प्रिये, व्यर्थ ही हमने कुसुमाकर उद्यान के दर्शन-कुतूहल द्वारा तुझे कष्ट पहुँचाया, क्योंकि—

भ्रुकुटी रूपी लताओं से सुशोभित, रक्त अधरों से पल्लवित यह तेरा (आनन्द देने वाला) मुखड़ा ही बस एकमात्र (स्वर्ग का) नन्दन उद्यान है, इसके अतिरिक्त और सब (उद्यान) तो निरे जंगल हैं। (११)

चेटी--(मुस्कराकर, विदूषक को लक्ष्य करके) सुना, (बीबी जी का) कैसा (मनोहर) वर्णन किया गया है ?

विदूषक--(मुस्कराते हुए) हाँ चतुरिका, तो इसमें तेरे गर्व करने की कौन सी बात है ? सुन्दर व्यक्ति तो हमारे में भी हैं, केवल डाह से कोई उनका वर्णन (प्रशंसा) नहीं करता।

चेटी--(मुस्करा कर) अजी, मैं तुम्हारा वर्णन (=प्रशंसा-रंगना) करती हूँ।

विदूषक--(फूला न समाता हुआ) मैं धन्य हूँ ! हाँ, इतनी कृपा तो करो ही--जिससे यह फिर कभी मुझे "ऐसा-वैसा बन्दर जैसा" न कह सके।

चेटी--अच्छा ! आज मैंने तुझे विवाहोत्सव के रतजगे के कारण ऊँघते देखा था--आँखें मुँदी हुई और ऐसा सुन्दर ! उसी प्रकार एक वार फिर बैठकर दिखाओ तो।

(विदूषक वैसे ही बैठ जाता है)

चेटी—(मन ही मन) अब अवसर है, घुले हुए नील के समान तमाल-पत्रों के रस से इसका मुँह काला करती हूँ। (उठकर पत्ते तोड़कर उन्हें निचोड़ने का अभिनय करती है)

---

**Maid**—(*Smiling, addressing the* Jester) Do you hear how she has been depicted ?

**Jester**—(*Smiling*) Don't ye feel elated on that account, Chaturika. Handsome persons are not wanting amongst us, too. But it is through envy that nobody comes forward to depict them so well.

**Maid**--(*Smiling*) Why, I shall put you in true colours, sir.

**Jester**—(*Joyfully*) You make me alive ! Please, please, madam, do this favour to me, so that this man may not say again, "You are like this, you are like that, you have a monkey's face, and so on."

**Maid**—Sir, I saw you this morning with your eyes closed, drowsing after the wedding vigil—how beautiful you looked t en ! May you again sit in that pose now.

[Jester *does so*]

**Maid**—(*Aside*) Now I shall blacken his face with the juice of Tamala leaves which resembles the blue indigo solution. (*Rising up, plucking leaves, acts as if crushing them*)

(जीमूतवाहनो मलयवती च विदूषकस्य मुखं पश्यतः)

**जीमूतवाहनः—वयस्य, धन्यः खल्वसि, यदस्मासु तिष्ठत्सु त्वमेवं वर्ण्यसे ।**

(चेटी तमालपल्लवस्य रसे विदूषकस्य मुखं नाट्येन कालीकरोति)

(मलयवती सस्मितं विदूषकं दृष्ट्वा जीमूतवाहनं पश्यति)

**जीमूतवाहनः—**

**स्मितपुष्पोद्गमो ऽयं ते दृश्यते ऽधरपल्लवे ।**
**फलं तु जातं मुग्धाक्षि पश्यतश् चक्षुषोर्मम ॥१२॥**

**विदूषकः—भोदि, किं दे किदं ?**

भवति, किं ते कृतम् ?

**चेटी—एं वण्णिदो सि ।**

ननु वर्णितो ऽसि ।

**विदूषकः—**(हस्तेन मुखं परामृज्य, हस्तं दृष्ट्वा, सरोषं दण्डकाष्ठमुद्यम्य, ससंरम्भम्) **दासीए धीदे, राअउलं क्खु एदं । किं दे करिस्सं ?** (जीमूतवाहनमुद्दिश्य) **भो, तुह्माणं पुरदो एव्व अहं दासीए धीदाए खलीकिदो ह्मि । किं मम इह ट्ठिदेण ? अण्णदो गमिस्सं ।** (निष्क्रान्तः)

(हस्तेन मुखं परामृज्य, हस्तं दृष्ट्वा, सरोषं दण्डकाष्ठमुद्यम्य, ससंरम्भम्) दास्याःपुत्रि, राजकुलं खल्वेतत् । किं ते करिष्यामि ? (जीमूतवाहनमुद्दिश्य) भो, युष्माकं पुरत एवाहं दास्याःपुत्र्या खलीकृतो ऽस्मि । किं ममेह स्थितेन ? अन्यत्र गमिष्यामि । (निष्क्रान्तः)

**चेटी—कुविदो क्खु मम अज्जो अत्तेओ । जाव गदुअ पसादेमि**

कुपितः खलु मम आर्य आत्रेयः । यावद् गत्वा प्रसादयामि ।

**मलयवती—हञ्जे चउरिए, कहं मं एआइणिं उज्झिअ गच्छसि ?**

हञ्जे चतुरिके, कथं मामेकाकिनीमुज्झित्वा गच्छसि ?

**चेटी—**(जीमूतवाहनमुद्दिश्य, सस्मितम्) **एवं एव्व चिरं एआइणी होहि ।**

(जीमूतवाहनमुद्दिश्य, सस्मितम्) **एवमेव चिरमेकाकिनी भव ।**

(निष्क्रान्ता)

---

[JIMUTAVAHANA *and* MALAYAVATI *meanwhile keep looking at* JESTER'S *face*]

**Jimutavahana**—You are a lucky dog, my friend that you are going to be depicted in true colours before our very eyes.

[MAID *acts as if blackening* JESTER'S *face with Tamala juice*]

[MALAYAVATI *smilingly looks at* JESTER, *and then at* JIMUTAVAHANA]

**Jimutavahana**—

*The efflorescence of a smile, O my fair-eyed darling, is bursting on thy leaf-like lips there, while its fruit, as I look at it, has appeared on my eyes here.* (12)

(जीमूतवाहन और मलयवती विदूषक के मुँह की ओर देखते हैं)

जीमूतवाहन—वाह मित्र, कैसा भाग्यवान् है तू, जो हमारे बैठे-बैठे तेरे सौन्दर्य में चार चाँद लगने लगे !

(चेटी तमालपत्रों के रस से विदूषक का मुख पोतती है)

(मलयवती मुस्कराती हुई, विदूषक को देखकर, जीमूतवाहन की ओर ताकती है)

जीमूतवाहन—

*मुग्धाक्षि, मुस्कराहट के फूल तो तेरे अधर-किसलयों पर खिल उठे हैं, पर फल तुझे निहारती इन मेरी आँखों को मिल गया है ! (१२)*

विदूषक—क्यों जी, तुमने यह क्या किया ?

चेटी—तुझे वर्णित (रञ्जित) ही तो किया है ।

विदूषक—(हाथ से मुँह पोंछकर, हाथ को देखकर, क्रोध से डण्डा उठाकर, हड़बड़ाता हुआ) चुड़ैल कहीं की, राजकुल में बैठे हैं ! पर तेरा करूँ क्या ? (जीमूतवाहन को लक्ष्य करके) देखा आपने, आपके संमुख इस चुड़ैल ने मुझे उल्लू बनाया है ! अब मेरा यहाँ ठहरने का क्या काम ? और कहीं जाता हूँ । (निकल जाता है)

चेटी—अरे, आत्रेय भैय्या तो मुझसे रूठ ही गए ! मैं जाकर उन्हें मना लाती हूँ ।

मलयवती—अरी चतुरिका, तू मुझे अकेली छोड़े जा रही है ?

चेटी—(जीमूतवाहन की ओर संकेत करके, मुस्कराती हुई) ऐसी अकेली तो तू सदा ही बनी रहे ! (चली जाती है)

---

**Jester**—Madam, what have you done ?

**Maid**—Only painted you in bright colours, sir.

**Jester**—(*Wiping face with hand, looking at hand, angrily taking up stick, in a rage*) O hussy, we are with the royal family here ! How shall I punish you ? (*Turning to* JIMUTAVAHANA) Look here, sir ! I have been made a fool of in your very presence by this misbegotten maid. What is the good of my staying here ? I had better go somewhere else.

**Maid**—Revered Atreya has indeed grown angry with me. So I shall go and pacify him.

**Malayavati**—Ha, Chaturika, my girl ! you go away leaving me alone ?

**Maid**—(*Pointing to* JIMUTAVAHANA, *smiling*) I wish you were alone like this for ever. (*Exit*)

जीमूतवाहनः—

दिनकर-करामृष्टं बिभ्रद् द्युतिं परिपाटलां
दशन - किरणैर् उत्सर्पद्भिः स्फुटीकृत - केसरम् ।
अयि, मुखम् इदं मुग्धे, सत्यं समं कमलेन ते
मधु मधुकरः किन्त्वेतस्मिन् पिबन् न विभाव्यते ॥१३॥

(मलयवती विहस्य मुखमुन्नमयति)

(जीमूतवाहनो दिनकरेति तदेव पठति)

(प्रविश्य)

चेटी—(सहसोपसृत्य) एसो क्खु सिद्धजुअराओ मित्तावसू केण वि कज्जन्तरेण कुमारं पेक्खिदुं आअदो ।

(सहसोपसृत्य) एष खलु सिद्धयुवराजो मित्रावसुः केनापि कार्यान्तरेण कुमारं प्रेक्षितुमागतः ।

जीमूतवाहनः—प्रिये, गच्छ त्वमात्मनो गृहम् । अहमपि मित्रावसुं दृष्ट्वा त्वरिततरमागत एव ।

(चेटीसहिता निष्क्रान्ता मलयवती । ततः प्रविशति मित्रावसुः)

मित्रावसुः—

अनिहत्य तं समर्थः कथमिव जीमूतवाहनस्याहम् ।
कथयिष्यामि तव हृतं राज्यं रिपुणेति निर्लज्जः ॥१४॥

तथाप्यनिवेद्यायुक्तरूपं गमनमिति निवेद्य गच्छामि । (उपसर्पति)

जीमूतवाहनः—मित्रावसो, इह आस्यताम् ।

(मित्रावसुरुपविशति)

जीमूतवाहनः—ससंरम्भ इव लक्ष्यसे ?

---

**Jimutavahana**—

*This face of thine, my darling, grown red with the rays of the sun and displaying filaments of light radiating from the teeth, is truly like a lotus. But one misses the bee sucking the honey from it.* (13)

[MALAYAVATI *laughs and raises up her face*]

[JIMUTAVAHANA *repeats the same stanza*—"This face of thine, etc."]

[*Enter*]

जीमूतवाहन—

*मुग्धे, यह तेरा मुखड़ा तो सचमुच ही कमल के समान है। क्योंकि सूर्य की किरणों के स्पर्श से यह लालिमा को धारण किये हुए है, और इसमें से उठती हुई दाँतों की चमकीली किरणें स्पष्ट केसर के समान हैं। किन्तु इसपर मधुरस पान करता हुआ भौंरा दिखाई नहीं देता! (१३)*

(मलयवती हँसती हुई मुँह को ऊपर उठाती है)

(जीमूतवाहन फिर वही दुहराता है—'मुग्धे, यह तेरा मुखड़ा...')

(चेटी का प्रवेश)

चेटी—(झटपट पास आकर) **महाराज, सिद्ध युवराज मित्रावसु किसी कार्यवश आपके दर्शन करने आए हैं।**

जीमूतवाहन—**प्रिये, तुम अपने घर चलो। मैं मित्रावसु से मिलकर शीघ्र ही आ रहा हूँ।**

मित्रावसु—

*शक्ति-शाली होता हुआ भी मैं उस शत्रु को मारे बिना निर्लज्ज बनकर जीमूतवाहन से कैसे कह दूँ कि तेरा राज्य शत्रु ने छीन लिया है? (१४)*

**और बताए बिना चले जाना भी ठीक नहीं, इसलिये अब बताकर ही जाऊँगा।** (पास जाता है)

जीमूतवाहत—**आओ, भाई मित्रावसु, आओ बैठो।**

(मित्रावसु बैठ जाता है)

जीमूतवाहन -**कुछ घबराए से लगते हो?**

---

**Maid**—(*Approaching suddenly*) Here is Mitravasu, the Siddha Prince, come to see the Prince on some business.

**Jimutavahana**—Darling, better go home. I shall be back just now after seeing Mitravasu.

[*Exit* MALAYAVATI *with* MAID. *Enter* MITRAVASU]

**Mitravasu**—

*How dare I convey brazen-facedly the news to Jimutavahana that his kingdom has been annexed by the foe, without having first vanquished the latter with all the forces at my command.* (14)

Nevertheless, it is not proper to go on the expedition withont informing him. So I shall first inform him and then go.

**Jimutavahana**—Come, Mitravasu, take your seat here.

[*Mitravasu sits down*]

**Jimutavahana**—You look some what agitated ?

मित्रावसुः—कः खलु मतङ्गहतके संरम्भः ?

जीमूतवाहनः—किं कृतं मतङ्गेन ?

मित्रावसुः—स्वनाशाय युष्मदीयं किल राज्यमाक्रान्तम् ।

जीमूतवाहनः—(सहर्षमात्मगतम्) अपि नाम सत्यमेतत् स्यात् !

मित्रावसुः—तदुच्छित्तये मामाज्ञापयतु कुमारः । किं बहुना,—

संसर्पद्भिः समन्तात् कृतसकलवियन्मार्गयानैर्विमानैः
कुर्वाणाः प्रावृषीव स्थगितरविरुचः श्यामतां वासरस्य ।
एते याताश्च सद्यस्तव वचनमितः प्राप्य युद्धाय सिद्धाः
सिद्धं चोद्वृत्तशत्रुक्षयभयविनमद्राजकं ते स्वराज्यम् ॥१५॥

अथवा, किं बलौघैः ?

एकाकिनाऽपि हि मया रभसावकृष्ट-
निस्त्रिंश - दीधिति - सटा - भर - भासुरेण ।
आरान्निपत्य हरिणेव मतङ्गजेन्द्रम्
आजौ मतङ्ग-हतकं हतमेव विद्धि ॥१६॥

जीमूतवाहनः—(कर्णौ पिधाय, आत्मगतम्) हहह, दारुणमभिहितम् ! अथवा, एवं तावत् । (प्रकाशं, सस्मितम्) मित्रावसो, कियदेतत् ? बहुतरमतोऽपि बाहुशालिनि त्वयि संभाव्यते । किन्तु,—

स्वशरीरमपि परार्थे यः खलु दद्यामयाचितः कृपया ।
राज्यस्य कृते स कथं प्राणिवधक्रौर्यमनुमन्ये ॥१७॥

---

**Mitravasu**—How can a wretch like Matanga be the cause of agitation ?

**Jimutavahana**—What has Matanga done ?

**Mitravasu**—Only invited his own ruin by invading your territory.

**Jimutavahana**—(*Joyfully, aside*) How I wish it were true !

**Mitravasu**—I am only awaiting orders from the Prince for putting him to route. What more shall I say but that,—

*Sooner than they have got orders from you, the Siddha armies, covering the whole field of the sky with their air fleet rushing from all sides, and turning the daylight into a loury gloom as it were by screening the sun from view, shall set out for battle and clear your territory of the headstrong foe who has terrorized your vassal chiefs by his depradations.* (15)

मित्रावसु—दुष्ट मतङ्ग से भला क्या घबराना ?

जीमूतवाहन—क्यों, मतङ्ग ने क्या किया है ?

मित्रावसु—केवल आपके राज्य पर आक्रमण करके अपनी मौत बुलाई है।

जीमूतवाहन—(सहर्ष, मन ही मन) क्या ही अच्छा हो यदि यह सच हो !

मित्रावसु—उसीके विनाश के लिये आप मुझे अनुमति-भर दे दें। बहुत क्या कहूँ—

*आप की आज्ञा हुई नहीं कि बस, ये सिद्ध वीर विमानों में (बैठकर) सारे आकाश मार्ग में चारों ओर उड़ते हुए और सूर्य की किरणों को रोककर दिन को वर्षाकाल की भाँति अन्धकारमय बनाते हुए तत्क्षण युद्ध के लिये प्रयाण कर देंगे और तेरे राज्य को—जहाँ उद्धत शत्रु की मार-धाड़ और आतंक ने अन्यान्य रजवाड़ों को वशी-भूत किया हुआ है—पुनः हस्तगत कर लेंगे। (१५)*

अथवा, सैन्य-समूह की भी क्या आवश्यकता है ?—

*मैं अकेला ही पर्याप्त हूँ। आप समझ लें कि मतङ्ग मरा कि मरा, जब मैं युद्ध भूमि में अपनी चमचमाती तलवार को तेज़ी से निकालकर निकट से ही उसपर ऐसे टूट पडूँगा जैसे कोई कटार सी चमकती हुई सटाओं वाला सिंह किसी मत्त-मतङ्ग पर टूट पड़ता है। (१६)*

जीमूतवाहन—(कान मूँदकर, मन ही मन) हाय, हाय, कैसी क्रूर बात कह दी इसने ! अस्तु, ऐसे कहता हूँ। (प्रकट, मुस्कराता हुआ) मित्रावसु, यह तो बात ही क्या है ! आपके बाहुबल से तो इससे कहीं अधिक शौर्य की बातें संभव हैं। किन्तु,—

*मैं जो बिना माँगे ही दया से अपने शरीर को परोपकार के हित अर्पित करने के लिये सदा उद्यत रहता हूँ, भला कैसे एक राज्य के लिये प्राणि-वध के इस घोर कर्म की अनुमति दे दूँ ? (१७)*

---

Or, why say large armies ?—

*You may take the wretched Matanga as dead, for I alone will be the death of him, when drawing my bright sword I shall make a dash and fall upon him in the battle-field and engage with him in a close combat, like a lion, with his mane glistening like a flashing sword, springing upon a wild elephant. (16)*

**Jimutavahana**—(*Stopping his ears, aside*) What a cruel idea ! Or, I shall say this. (*Aloud*) Mitravasu, it is but a trifle (for a man like you). Far bigger exploits could be expected of you who are so powerful. But,—

*How can such a one as I, who am always ready to sacrifice my life out of compassion for the sake of others even without waiting for the asking, give my approval to a carnage for the sake of a kingdom ? (17)*

अपि च, क्लेशान् विहाय शत्रुबुद्धिरेव मे नान्यत्र । यदि ते ऽस्मत्प्रियं कर्तुमीहा, तदनुकम्प्यतामसौ क्लेशदासीकृतस्तपस्वी ।

मित्रावसुः—(सामर्ष सहासं च) कथं नानुकम्प्यते? यादृशो ऽसावस्माकमुपकारी कृपणश्च !

जीमूतवाहनः—(आत्मगतम्) प्रत्यग्रकोपाक्षिप्तचेतास्तावदसौ न शक्यते निवर्तयितुम् । तदेवं तावत् । (प्रकाशम्) मित्रावसो, उत्तिष्ठ । अभ्यन्तरमेव प्रविशावः । तत्र च त्वां बोधयिष्यामि । संप्रति परिणतमहः । तथाहि,—

निद्रामुद्रावबन्धव्यतिकरम् अनिशं पद्मकोशादपास्यन्
आशा - पूरैक - कर्म - प्रवण - निज-कर-प्रीणिताशेष - विश्वः ।
दृष्टः सिद्धैः प्रसक्तस्तुतिमुखरमुखैरस्तमप्येष गच्छन्
एकः श्लाघ्यो विवस्वान् परहितकरणायैव यस्य प्रयासः ॥१८॥

(निष्क्रान्तौ)

तृतीयो ऽङ्कः

---

Besides, I harbour no animosity against anyone but carnal passions. But if you are really anxious to do a good turn to me, then you should rather pity that poor fellow who is a slave to his passions.

**Mitravasu**—(*With indignation and a sneer*) Why not pity him ? as if he has been our great benefactor and deserves our sympathy !

**Jimutavahana**—(*Aside*) It is difficult to check him at this moment when his mind is in a fresh transport of rage. Anyway, let me try like this. (*Aloud*) Get up, Mitravasu, let us go in. There I shall give you my advice, for the day has come to a close. See,—

और मैं तो विषय-वासनाओं के अतिरिक्त किसीको भी अपना शत्रु नहीं समझता। यदि सचमुच तुम मुझे प्रसन्न करना चाहते हो तो उस बेचारे विषयों के दास (मतङ्ग) पर अनुकम्पा करो।

मित्रावसु—(क्रोध से, व्यंग्यपूर्वक हँसते हुए) अनुकम्पा क्यों न करूँ ? उसीने जो हमारे ऊपर बड़ा उपकार किया है ? वह बेचारा !

जीमूतवाहन—(मन ही मन) अभिनव क्रोध से इसका मन क्षुब्ध है, इसलिये अभी इसे रोकना असम्भव है। अस्तु, ऐसे सही। (प्रकट) उठो मित्रावसु, अन्दर चलें, वहीं चलकर तुम्हें समझाऊँगा। अब तो दिन भी ढल चुका है। क्योंकि,—

*केवल सूर्य (देवता) ही एक ऐसा परोपकारी है, जिसकी अस्त वेला में भी सिद्ध-जन टकटकी लगाए मुक्त कण्ठ से स्तुति करने में लीन हैं। कहाँ तक प्रशंसा की जाए—इसकी प्रत्येक चेष्टा-क्रिया दूसरों की भलाई के लिये होती है। दिनभर दिग्दिगन्तर को (प्रकाश से) पूरित करने के एक मात्र कर्तव्य में रत अपनी किरणों से, मानों आशा पूरी करने में निरन्तर लगे हुए अपने हाथों से, सारी सृष्टि को आह्लादित करता है और कमलों के मुँदे कोषों (=मुरझाए मुखड़ों) से संकोच-रूपी निद्रा को सदैव दूर करता है। (१८)*

(दोनों का निष्क्रमण)

## तृतीय अङ्क समाप्त

---

*Ever engaged in removing the wilting look from the face of the closed lotuses, ever delightnig the whole world by flooding the quarters with his rays as if solely engaged in fulfilling men's desires, and ever looked at (with reverence) by the Siddhas with loud songs of praise—the sun, even while it is setting, is the one laudable exemplar of all whose efforts are directed towards the good of others.* (18)

[*Exeunt both*]

## END OF THE THIRD ACT

# चतुर्थोऽङ्कः

(ततः प्रविशति गृहीतवस्त्रयुगलः काञ्चुकीयः, प्रतीहारश्च)

काञ्चुकीयः—

अन्तःपुराणां विहितव्यवस्थः पदे पदेऽहं स्खलितानि रक्षन्।
जरातुरः संप्रति दण्डनीत्या सर्वं नृपस्यानुकरोमि वृत्तम् ॥१॥

प्रतीहारः—आर्य, क्व नु खलु भवान् प्रस्थितः ?

काञ्चुकीयः—आदिष्टोऽस्मि देव्या मित्रावसोर्जनन्या, यथा—"कञ्चुकिन्, त्वया दशरात्रं यावन्मलयवत्या जामातुश्च रक्तवासांसि नेतव्यानीति"। कुत्र प्रथमं गच्छामि ? राजसुता च श्वशुरकुले वर्तते। जीमूतवाहनोऽपि युवराजेन मित्रावसुना सह समुद्रवेलां द्रष्टुमद्य गत इति मया श्रुतम्। तन्न जाने किं मलयवत्याः समीपं गच्छाम्युताहो जामातुरिति।

प्रतीहारः—आर्य, वरं राजपुत्र्याः समीपगमनम्। तत्र हि कदाचिदियत्या वेलया जामाता प्रत्यागतो भविष्यति।

काञ्चुकीयः—सुनन्द, साधूक्तम्। भवता पुनः क्व गम्यते ?

प्रतीहारः—अहमपि महाराजविश्वावसुना समादिष्टः, यथा—"सुनन्द, गच्छ, मित्रावसुं ब्रूहि—अस्मिन् दिवसे प्रतिपदुत्सवे मलयवत्या जामातुश्चैतदुत्सवानुरूपं किञ्चिदागत्य निरूपयेति"। तद् गच्छतु राजपुत्र्याः सकाशमार्यः। अहमपि मित्रावसोराह्वानाय गच्छामि।

(निष्क्रान्तौ)

विष्कम्भकः

---

## FOURTH ACT

[*Enter* CHAMBERLAIN *carrying a pair of wedding-shawls, and* PORTER]

**Chamberlain**—

*Maintaining the order of the harem, guarding against stumbling at every step by the guidance of a staff, I, who am now enfeebled by age, imitate the whole conduct of a king, who maintains the order of his towns within and guards them against slips continually by the administration of justice.* (1)

**Porter**—Whither have you set out, sir ?

**Chamberlain**—I have been ordered by Queen, the mother of Mitravasu, saying, "Chamberlain, for ten days daily you should take red clothes to Malayavati and my son-in-law." Now, whither should I go first ? The Princess is in her father-in-law's house, while Jimutavahana, I hear, has today gone to see the tide on the sea-shore in company with the Crown Prince

विपञ्ची—

सप्ततन्त्री भवेच्चित्रा विपञ्ची नवतन्त्रिका ।
विपञ्ची कोण-वाद्या स्यात् चित्रा चांगुलिवादना ॥

But strange enough Sri Harsha, through the mouth of Jimutavahana, notes—

कोमलांगुलितलाभिहन्यमाना नातिस्फुटं क्वणन्ति तन्त्र्यः !

Mark the स्वभावोक्ति in the attentive deer in the 3rd and 4th lines of the verse and compare the still better उत्प्रेक्षा *cum* स्वभावोक्ति of Somadeva—

आकर्ण्यमान-संगीत-मञ्जु-वीणा-रवां मृगैः ।
दृष्ट-लोचन-लावण्य-लज्जितैरिव निश्चलैः ॥

'काकली'—तु कले सूक्ष्मे ( इत्यमरः ) । उपवीणयति—उप+वीणय Denom. stem (from वीणा)=वीणां कोणेनाभिहन्ति ।

पृष्ठ १६—

पंक्ति १८—*Read* देवदाग्रदणं *for* दवाग्रदणं ।

पृष्ठ १८—

वन्द्याः खलु देवताः = 'We should gratefully acknowledge (whatever) *gods* (*send* us) !'—Could it not mean this ?

श्लोक १४—

भगवति—भग has six meanings.—

"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञान-विज्ञानयोश्चैव षण्णां भग इतीरणा ॥"

श्लोक १५—

Some more technical terms—

व्यञ्जनः—One of the four धातुs in music—

विस्तारः करणश्चैवाविद्धो व्यञ्जनस्तथा ।
चत्वारो धातवो ज्ञेया वादित्रकरणाश्रयाः ॥

व्यञ्जनधातुः—

इति दशविधः प्रयोज्यो वीणायां व्यञ्जनो धातुः—
...... कल-तल-निष्कोटित-अन्यथोन्मृष्टम् ।
रेफ-अवमृष्ट-पुष्प-अनुस्वनितं बिन्दुर् अनुबन्धः ॥

लयः—Time

तालान्तरालवर्ती यः स कालो लय उच्यते ।
त्रिविधः स च विज्ञेयो द्रुतो मध्यो विलम्बितः ॥

यतिः—

ताल-च्छन्दो-ऽवगति-विषये वाद्यते यो विरामः ।
वाद्यैर् हीनः श्रवण-सुभगो नामतः सा यतिः स्यात् ।
समा स्रोतोवहा चैव गोपुच्छा चेति सा त्रिधा ॥

वाद्यविधिः—

त्रिविधं वैणववाद्यं कर्तव्यं गीत-संश्रयं तज्ज्ञैः ।
तत्त्वं तथानुगत-मोघश्चानेक-करण-संयुक्तम् ॥
स्थिते तत्त्वं प्रयोक्तव्यं मध्ये चानुगतं भवेत् ।
द्रुते चौघं प्रयुञ्जीयाद् एष वाद्यगतो विधिः ॥

(भरतनाट्यशास्त्र, अध्याय २६)

पृष्ठ २२ : श्लोक १६—

कृतार्थमभवच् चक्षुःसहस्रं हरेः, a fling at the gay nature of the heavan's (rake-hell !) gallant Indra, for which he was cursed to turn into a *Sahasra-bhaga*.

चिरस्य तावत् कालस्य = चिरात्, एतावत्कालानन्तरमद्य । अद्य जानामि स्वप्ने —I have experienced this in my dream what I cannot forget. The unforgotten dream alone is expressed in Sanskrit idiom by जानामि. ते पाणिग्रहणं निर्वर्तयिष्यति—तेरा व्याह निबेड़ देवेगा ।

पृष्ठ २४—

अवसरः खलु अस्माकं देवी-दर्शनस्य—Here the word देवी hints at Malayavati and not Gauri. ( ससाध्वसमुत्तिष्ठन्ती ) हञ्जे को नु खल्वेषः ? But this does not depict even half the flurry of the girl. Somadeva's description is more effective.

तथानुरागविवशा भेजे कन्या विहस्तताम् ।
यथा सखीव वीणास्या व्याकुलालापतां ययौ ॥ ६०.४८ ॥

श्लोक १७—

संभ्रम-कारिणि=संभ्रमं सहसागन्तुकदर्शनजं त्रासं करोति या तथाभूते। खिद्यसे—*v. l.* खिद्यते।

पृष्ठ २८—

कुलपतिः—

मुनीनां दशसाहस्रं यो ऽन्नपानादिपोषणात्।
अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः॥

सवनम्—'सवनं त्वध्वरे सोम-निर्दलने ऽपि च' (इति मेदिनी)।

श्लोक १८—

उष्णीषः—'उष्णीषस्तु शिरोवेष्टे किरीटे लक्षणान्तरे' (इति मेदिनी); परन्तु शिवरामः, उष्णीषबन्धस्थाने ललाटोपरि पट्टबन्धरेखा उष्णीषः कथ्यते। ऊर्णा—भ्रू-मध्यगावर्ते तन्तौ मेषादिलोमसु। The Chakravarti signs noticed here were actually all present on the person of Buddha and were witnessed by his contemporaries.

चिरात् खलु युक्तकारी विधिः स्यात्—The idea has been borrowed from Kalidasa—

परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत्।
अस्मिन् द्वये रूपविधानयत्नः पत्युः प्रजानां विफलो ऽभविष्यत्॥ (रघु० ७.१४)

पृष्ठ ३०—

ननु सर्वस्याभ्यागतो गुरुः—

गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः।
पतिरेको गुरुः स्त्रीणां सर्वस्याभ्यागतो गुरुः॥

श्लोक १९—

*Cf. Sakuntala, 1.33*—

गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः।

श्लोक २०—

मन्थरं यानं यस्यास्तया।

पृष्ठ ३१—

पंक्ति १२—*Read* जीमूतवाहन को *for* जीमूतवाहन का।

पृष्ठ ३२—

धमधमायते—अग्निप्रज्वलनस्यानुकरणशब्दः।

श्लोक २१—

आपाण्डू = ईषत्पाण्डू । आयल्लक = 'स्यादायल्लकमाध्यानमुत्कण्ठोत्कलिका रतिः।' Longing intensified by constantly poring over the mental image of the beloved.

पृष्ठ ३३—

पंक्ति ३—*Read* कन्द-मूल- *for* कन्द-मल- ।

## द्वितीय अङ्क

कथासार—मलयवती काम-संतप्त है। वह अपने हृदय-ताप को शान्त करने के लिये चन्दनलतागृह में चन्द्रमणि-शिला पर विश्राम करने आई है । उसका मन विक्षिप्त है। उसके चरण विवश गौरी-मन्दिर की ओर ही पड़ते हैं। चेटी को सब भेद ज्ञात है। वह सचमुच 'चतुरिका' है।

उधर जीमूतवाहन को स्वप्न आया है कि उसकी प्रेयसी यहीं-कहीं चन्दनलता-गृह में उसके विलम्ब करने पर प्रणय-कुपिता बैठी रो रही है। प्रेयसी के स्वप्न-संगम की सुखद स्मृतियों से पूर्ण इसी स्थान पर वह विदूषक के साथ दिन बिताने आ जाता है। विरह-विधुरों की भाँति वह स्वप्न-प्रेयसी को चन्द्रमणि-शिला पर चित्रित करके अपने मन को परचाता है।

वियोगावस्थासु प्रिय-जन-सदृक्षानुभवनं
ततश्चित्रं कर्म स्वपन-समये दर्शनमपि।
तदङ्ग-स्पृष्टानाम् उपनतवतां स्पर्शनमपि
प्रतीकारः कामव्यथितमनसां को ऽपि कथितः ॥

लताजाल की ओट से मलयवती और चतुरिका उन दोनोंका वार्तालाप सुन रही हैं। शब्द उन्हें अधूरे सुनाई देते हैं। 'एष सा (चन्द्रमणिशिला') के प्रथम दो शब्द सुनते ही मलयवती का मन स्त्रीसुलभ ईर्ष्या से सशङ्क हो उठता है। 'न जाने वह कौन होगी जिसे यह प्रेम करता है ?'

महाराज विश्वावसु का संदेश लेकर उनका पुत्र मित्रावसु अपनी बहिन मलय-वती का वाग्दान करने के लिये जीमूतवाहन को ढूँढता हुआ वहीं आ पहुँचता है। किन्तु जीमूतवाहन कैसे अपनी स्वप्न-प्रेयसी से प्रणय-विमुख होकर कोई और प्रस्ताव स्वीकार कर सकता है ?

अब मलयवती के लिये आत्महत्या के अतिरिक्त और गति ही क्या है ? परन्तु छुपे-छुपे देख रही चेटी शोर मचा देती है । जीमूतवाहन तत्क्षण आकर उसे बचा लेता है। जीमूतवाहन को खेद है कि मैंने प्रस्ताव क्यों ठुकराया। और मलयवती किस चित्र-प्रेयसी से डाह कर रही थी ?

इसी समय चेटी द्वारा जीमूतवाहन के माता-पिता की ओर से मलयवती को पुत्रवधू के रूप में स्वीकार करने की अनुमति आ जाती है।

पृष्ठ ३४—

पंक्ति १३—*Read* त्वरित- *for* त्बरित-।

पृष्ठ ३६—

आत्मम्भरित्वम्—आत्मानं बिभर्तीति आत्मम्भरिः, तस्य भावः। 'आत्मम्भरिः कुक्षिभरिः स्वोदरपूरके' (इत्यमरः)।

पृष्ठ ३८—

कुसुमायुध—अरविन्दमशोकं च चूतं च नवमालिका।
नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः॥

अबला इति कृत्वा प्रहरन् कथं न लज्जसे? अत्र प्रत्यनीकालंकारः—

प्रतिपक्षमशक्तेन प्रतिकर्तुं तिरस्क्रिया।
या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते॥

*Cf.* रत्नावली—'भगवन् कुसुमायुध निर्जितसकलसुरासुरो भूत्वा कथं स्त्रीजनं प्रहरन् न लज्जसे?'

पृष्ठ ३६—

पंक्ति १०—*Read* तूने *for* तून।

पृष्ठ ४२—

पंक्ति ३—*Read* लच्छि अणु- *for* लच्छि अण-।

अकृत-प्रतिपत्तिम्—न कृता प्रतिपत्तिः संमानमतिथिसत्क्रिया वा यया ताम्। संभावयिष्यति—समझेगा, will take me for. Ordinarily संभवाना means 'honouring'.

पृष्ठ ४४ : श्लोक २—

तेनैव मय्याहते, पुष्पेषो! भवता मुधैव किमिति क्षिप्यन्त एते शराः—*Cf.* मरते को मारना बेदर्दी से, बहुत दूर है जवाँमर्दी से!

श्लोक ३—

विधुर—'वैकल्ये ऽपि च विश्लेषे विधुरं विकले त्रिषु' इति मेदिनी।

श्लोक ४—

स्त्रीहृदयेन—स्त्रिया हृदयमिव हृदयं यस्य तेन। केचित्तु—'स्त्रीगतं स्त्रियामासक्तं हृदयं यस्य तेन भार्यासक्तमनसा' इति।

पृष्ठ ४६—

हृदयं मे तुलयतु—यथा वणिक् किमपि वस्तु हस्त आधाय तद्द्वारं क्षणात् तुलाधृतमिव जानाति तथैव मे ऽन्तरवस्थां को ऽपि जानातु चेत्?

पृष्ठ ४८ : श्लोक ५—

निशाया मुखम् = 'प्रदोषो रजनीमुखम्' (इत्यमरः)।

पृष्ठ ५० : श्लोक ६—

घनः (घनं यथा स्यात्तथा वा) श्वसितानामुद्गमो यस्या सा। आकूतम्—प्रणयमानजनितः कोपालम्भरूपो ऽभिप्रायः।

पंक्ति १४—*Read* युज्यत *for* युज्जत। पंक्ति १७—तावच्छृणुवः *for* तावच्छणुवः

पृष्ठ ५२ : श्लोक ८—

अ-क्लिष्ट-बिम्ब-शोभाधरस्य—(शशिनः, मुखस्य च); (i) अक्लिष्टं केतुना ऽग्रसितं पूर्णं बिम्बं = मण्डलं, तस्य शोभां धारयतीति, तस्य शशिनः। (ii) अक्लिष्टम् अम्लानं परिपक्वं च यत् बिम्बफलं, तस्य शोभा इव शोभा यस्यास्तीति, सो ऽधरो यस्मिन् तस्य मुखस्य। रेखा—चित्र-रेखा, शशिलेखा च।

पृष्ठ ५४ : श्लोक ९—

*Cf.* भवभूति—

चिरं ध्यात्वा-ध्यात्वा निहितैव निर्माय पुरतः। (उत्तरराम०)

पंक्ति ११—*Read* जीवित-निरपेक्ष *for* जीवित-निरपेक्षं—जीविते जीविताद् वा निर्गता ऽपेक्षा (आस्था) यस्य सः।

पंक्ति १३—*Read* मित्रावसुरिहैवा° *for* मित्रावसुरहैवि°।

योग्य ऽयं वरः—

कन्या वरयते रूपं माता वित्तं पिता श्रुतम्।
बान्धवाः कुलमिच्छन्ति (मिष्ठान्नमितरे जनाः)॥

अवस्थान्तरम्—अन्यावस्थाम्।

श्लोक १०—

रूपेण = रूपविषये, *Cf.* अक्ष्णा काणः *vide* वार्तिक—'प्रकृत्यादीनामुपसंख्यानं कर्तव्यम्' on Panini येनाङ्गविकारः।

पृष्ठ ५५—

पंक्ति २५—*Read* Jimutavahana *for* 2nd Mitravasu.

पंक्ति २७=*Read* Malayavati *for* Malayvati.

पृष्ठ ५७—

पंक्ति १—*Read* मैंने *for* मने।

पृष्ठ ५८—

प्रतिग्रहीतुम् = स्वीकर्तुम्।

पृष्ठ ६०—

निवेदितात्मनः—निवेदित आत्मा यैस्तान्। प्रत्याख्यानलघुः—प्रत्याख्यानेन लघूकृतः न्यक्कृतः।

भगवति गौरि इह त्वया न कृतः प्रसादः, etc. *Cf.* कथासरित्° ।

त्वद्भक्तया देवि संवृत्तो नास्मिन् जन्मनि चेन्मम ।
जीमूतवाहनो भर्ता तद् भूयात् सो ऽन्यजन्मनि ॥ ९०.७२॥

पंक्ति १७—*Read* °दारिका ऽऽज्ञापयति *for* °दारिका ऽज्ञापयति ।

पृष्ठ ६२—

As against चेटी's परित्रायध्वम् in नागानन्द, in कथासरित्° Malayavati complains—

हा नाथ विश्वविख्यातकरुणेनापि न त्वया ।
कथमस्मि परित्राता देव जीमूतवाहन ॥ ९०. ७४॥

पृष्ठ ६४—

प्रतीष्टा = प्रतिगृहीता, स्वीकृता ।

पृष्ठ ६६—

दुर्जनीकृता ऽस्मि—अदुर्जनो ऽहं दुर्जन इव कृता, इति दुर्जनीकृता ऽस्मि । अभूत-तद्भावे च्विः । अत्र तु दोषो ममैव यदहमेनमन्यसंक्रान्तहृदयम् आशङ्कितवती, इति लज्जितास्मि । But the more appropriate meaning of this word appears to be "made a fool of". *Cf.* खलीकृतः, Act III, *p.* 78 *l.* 20.

गान्धर्वो विवाहः—One of the eight varieties of marriage—

इच्छया ऽन्योन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्वः स तु विज्ञेयो मैथुनः काम-संभवः ॥ मनु० ३.१२॥

पृष्ठ ६८ : श्लोक १३—

पिष्टातकः = गुलाल, *Cf.*—'पिष्टातः पटवासकः' इत्यमरः and उत्सवेषु रजनीतण्डुलकुङ्कुमादीनां तत्र-तत्र उलूखलावहननेन चूर्णप्रसारणं क्रियते तत् पिष्टात-कमुच्यते इति विमर्शिन्यां शिवरामः । सद्यःसिन्दूरेण दूरीकृता दिवस-समारम्भस्य सन्धयायाश्चातप-श्रीर् येन स सिद्धलोकः । चलत्सु चरणेषु ये रणन्तो नूपुरास्तेषां ह्रादेन रवेण हृद्यैः मनोज्ञैः । उद्वाहस्नानवेलां सिद्धलोको वैतालिक-मुखेन कथयति । उद्गीतैः—गान्धारग्रामेण उच्चैर्गीयमानैर् गीतैः—

षड्ज-मध्यम नामानौ ग्रामौ गायन्ति मानवाः ।
न तु गान्धारनामानं स लभ्यो देवयोनिभिः ॥

स्नापनकम्—स्नानोचितं साधनादि द्रव्यं वेला वा ।

श्लोक १४—

समागमः—Says Vatsyayana in his ***Kamasutra*** 3.1.18—

(i) यस्यां मनश्चक्षुषो प्रवृत्तिस् तस्यामृद्धिः, and at 3, 1, 1—

(ii) सवर्णायामनन्यपूर्वायां शास्त्रतो ऽधिगतायां धर्मो ऽर्थः पुत्राः संबन्धः पक्षवृद्धिरनुपस्कृता रतिश्च । *Cf.* Kalidasa मालविकाग्निमित्र, ३. १५—

अनातुरोत्कण्ठितयोः प्रसिध्यता समागमेनापि रतिर्न मां प्रति ।
परस्परप्राप्तिनिराशयोर्वरं शरीरनाशो ऽपि समानुरागयोः ॥

and Bhavabhuti मालतीमाधव—

इतरेतरानुरागो हि विवाहकर्मणि परार्ध्यं मङ्गलम् ।

पृष्ठ ६६—

पंक्ति १४—सारी निकाल दो । पंक्ति १६—*Read* जीमूतवाहन *for* जीभूतवाहन ।

## तृतीय अङ्क

कथासार—मलयवती और जीमूतवाहन का विवाह संपन्न हो चुका है । उसी मङ्गल उत्सव के उपलक्ष्य में सिद्ध तथा विद्याधर आपानोत्सव की रंग-रलियाँ मना रहे हैं । कुसुमाकर उद्यान के एक ओर विट (शेखरक) अपने चेट के साथ मदिरा की मादकता में गिरता-पड़ता अपनी प्रेयसी नव-मालिका की खोज में है ।

सामने से मधुकरों से अपनी जान बचाकर विदूषक स्त्रियों की भाँति शाल में लिपटा घूँघट निकाले आ रहा है । शेखरक उसे रूठकर जाती हुई नवमालिका समझकर आलिङ्गन करके उसे मनाता है । उसी समय पीछे से व्याज कोप में आँखें लाल किये नवमालिका आ जाती है । दोनों शेखरक तथा विदूषक उसके संमुख लज्जित हो जाते हैं । शेखरक से गलती में विदूषक के साथ यह समधियों का-सा उपहास हो गया था । वह नवमालिका और विदूषक को एक साथ बिठाकर उन दोनों से एक साथ क्षमा माँगना चाहता है । और फिर नवमालिका के होंठों से सुच्ची की हुई मदिरा से विदूषक का समधियों का-सा ही मान करता है ।

* * *

इधर विवाहोपरान्त मलयवती और जीमूतवाहन कुसुमाकर उद्यान की शोभा देखने आते हैं । जीमूतवाहन के लिये उद्यान फीका है, क्योंकि नन्दनवन स्वयं मलयवती का सुन्दर मुख ही है । विदूषक (जो इसी समय नवदम्पती से आ मिलता है) की रोमाञ्च भावना जाग उठती है । चेटी—वह 'चतुरिका' भी तो है—जैसे जीमूतवाहन मलयवती का सौन्दर्य वर्णन करता है वैसे ही वह भी विदूषक का वर्णन (मुँह काला) करती है । विदूषक रुष्ट होकर चला जाता है । चेटी उसे मनाने के लिये चल देती है ।

अब मलयवती और जीमूतवाहन के लिये एकान्त है । जीमूतवाहन प्रेयसी का

मुख चूमने के लिये लालायित हो उठता है कि उसी समय मित्रवसु मतङ्ग के आक्रमण का समाचार लेकर वहीं पहुँच जाता है ।

पृष्ठ ७० : श्लोक १—

बलदेवः—श्रीकृष्ण जी का बड़ा भाई । यादव वंश मदिरा के चस्के के लिये बदनाम है । पहले बलराम को भी इसकी लत थी, परन्तु रेवती की आँखों को देखकर उसने मदिरा पीनी छोड़ दी और वह सरस्वती नदी के तट पर वानप्रस्थों का-सा जीवन व्यतीत करने लगा (देखो हमारा मेघदूत, पूर्वमेघ, श्लोक ५३, पृष्ठ ६०-६१) ।

श्लोक २—

दत्तैस् तत्र निहितैर् उत्पलैर् वासिता ।

पृष्ठ ७२—

कीदृशो नवमालिकया विना शेखरकः ?—नवमालिका = १. मालती पुष्प, २. लता, ३. नववधू, ४. 'नवमालिका' चेटी; and शेखरक = १. सेहरा, २. वृक्ष, ३. दुलहा, ४. 'शेखरक' विट ।

दुष्टमधुकराः = १. °भ्रमराः, २. °मद्यपाः ।

सबहुमानं वर्णकैर्विलिप्तो ऽस्मि, but not yet by चेटी चतुरिका. Mark the ध्वनि for अस्माकमपि मध्ये दर्शनीयो जनो ऽस्त्येव, केवलं मत्सरेण कोपि न वर्णयति (पृष्ठ ६०) ।

सन्तान-कुसुम-शेखरं च पिनद्धम्, mark ध्वनि ! Probably the suggestion is सन्तान-कुसुम = नवमालिका and शेखर = शेखरक; in fact the whole passage from श्रुतं मया to दुष्टमधुकराः किं करिष्यन्तीति is a foreshadow of the events which Vidushaka will have to face shortly.

पृष्ठ ७३—

पंक्ति २—*Read* संपन्न *for* संप्पन्न । पंक्ति ३—*Read* °त्सव *for* °त्सब and विद्याधर *for* विद्याधार । नीचे से पंक्ति ३ *Read* loosely *for* lossely.

पृष्ठ ७४—

कण्ठे गृहीत्वा = Embracing and clasping round the neck.

नीचे से पंक्ति ६—*Read* °दारिकाया *for* °दाटिकाया ।

पृष्ठ ७६ : श्लोक ३—

हरि-हर-पितामहानाम् = विष्णु-शिव-ब्रह्मणाम् ।

मत्तपालक = मत्तबालक ? or मतवाला ? कपिलमर्कट—Because he

himself had said 'मलयवत्या बन्धुजनेन जामातुः प्रियवयस्य इति सबहुमानं वर्णकैर्विलिप्तो ऽस्मि' (पृष्ठ ७२)।

पंक्ति ११—*Read* द्वावप्येतौ *for* द्वाप्येता।

पृष्ठ ७८—

खलीकृतः = made a fool of; *Cf.* दुर्जनीकृता ऽस्मि (says मलयवती), Act II, *p.* 66. कृतः परिहासः = कृतं (अलं) परिहासेन। 'हुन छड्डो हासा'।

पृष्ठ ८०—

पंक्ति २—*Read* दिष्ट्या *for* दिष्टया।

पीत्वा चोक्षित्वा—च+-उक्षित्वा सन्धिच्छेद करके कोई इसका अर्थ करते हैं 'पीकर और धोकर'। इस अर्थ में कोई रस और वैचित्र्य नहीं। हमने इसका अर्थ किया है 'पीकर और सुच्चा करके' अर्थात् अपने होंठों से लगाकर पवित्र करके। अन्यथा, आगे चलकर "एतन्नवमालिकामुखसंसर्गविवर्धितरसम्" कहने का कोई अर्थ ही नहीं रहता। अपरं च श्लोक ९ में "दयितापीतावशिष्ठानि मधूनि" पीने में जो स्वाद है वह प्याला धोकर पीने में नहीं। प्राकृत में चोक्खिअ (Skt. चोक्षित्वा) के स्थान पर चक्खिअ पाठ भी उपलब्ध है, जिसका अर्थ चखकर (Skt. आस्वाद्य) है। उस पाठ से पिबिअ (Skt. पीत्वा) निरर्थक हो जाता है।

पृष्ठ ८२—

'मर्षयतु मर्षयतु, आर्यः' is more for his hurry to run to the drinking booth—'येनाहं नवमालिकया सहापानकं गमिष्यामि—than for यन्मया मदपरवशेनापराद्धम्। स्नास्यामि—Because says Manu (9. 54)

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह॥

नीचे से पंक्ति ९—*Read* प्रियवयस्यो *for* प्रियवयस्या।

पृष्ठ ८४ : श्लोक ४—

दृष्टा दृष्टिमधो ददाति *Cf.* कुमारसम्भव ८. २—

व्याहृता प्रतिवचो न संदधे गन्तुमैच्छदवलम्बितांशुका।
सेवते स्म शयनं पराङ्मुखी सा तथापि रतये पिनाकिनः॥

also मालविकाग्निमित्र, ४. १५—

हस्तं कम्पवती रुणद्धि रशनाव्यापारलोलाङ्गुलि
हस्तौ स्वौ नयति स्तनावरणतामालिङ्ग्यमाना बलात्।
पातुं पक्ष्मलचक्षुरुन्नमयतः साचीकरोत्याननं
व्याजेनाप्यभिलाषपूरणसुखं निर्वर्तयत्येव मे॥

And विश्वनाथ gives a graphic definition of such a मुग्धा नायिका—

दृष्ट्वा दर्शयति व्रीडां संमुखं नैव पश्यति।
प्रच्छन्नं वा भ्रमन्तं वाऽतिक्रान्तं पश्यति प्रियम्॥
बहुधा पृच्छ्यमानाऽपि मन्द-मन्दम् अधोमुखी
सगद्गदस्वरं किंचित् प्रियं प्रायेण भाषते॥
अन्यैः प्रवर्तितां शश्वत् सावधाना च तत्कथां
शृणोत्यन्यत्रदत्ताक्षी प्रिये बालाऽनुरागिणी॥

श्लोक ५—

दावानलदीप्तिभिश्चन्द्रातपैः etc. *Cf.* दुःष्यन्त's condition at *Sakuntala* ३. ३.—'विसृजति हिमगर्भैरिन्दुरग्निं मयूखैः'।

प्रतिपक्षवादिनी—प्रतिकूलवचनशीले। भूतार्थवादस्यापि स्तुतिपरत्वप्रतिपादनमेवात्र प्रतिपक्षवादित्वम्। Because Malayavati in her remark 'प्रियमपि भणितुं जानाति' implied flattery and not sincerity on the part of Jimutavahana. This was her प्रतिपक्ष as the चेटी says, for "सत्यमेवैतत्, किमत्र प्रियवचनम्?"

स्वैरं-स्वैरम्—'मन्द-स्वच्छन्दयोः स्वैरम्' इत्यमरः।

पृष्ठ ८६ : श्लोक ६—

With last line *Cf. Sakuntala, 1. 20,* "किमिव हि मधुराणां मण्डनं नाकृतीनाम्?"

श्लोक ७—

कुट्टिमान्तान् = शिलामयान् भूतलान् pavements, or कुट्टिमो बद्धा भूमिः, तस्याः प्रान्तप्रदेशान् sides or borders of floors. धारागृहाणां = प्रपातानाम्। यन्त्रोन्मुक्तः—वारियन्त्रेभ्य उन्मुक्तः विसृष्टः पतित इत्यर्थः। आपाते = यन्त्रनिपतने य उत्पीडो वेगस्तेन हेलया सलीलं हृतेन कुसुमरजसा पिञ्जरो जलौघः।

श्लोक ८—

प्रकटः प्रकटीकृतः पट-वासस्य व्यतिकरः संबन्धो येषां ते। अथवा, प्रकटः सुव्यक्तः पटवासस्य पिष्टातकस्य हरिद्राकुङ्कुमादिचूर्णस्य व्यतिकरः सम्बन्धः येषां ते। पटवासः = उत्सवेषु हरिद्राकुङ्कुमतण्डुलादिचूर्णकृतो वसनकेशपाशादिषु उद्धूलनविधिः।

पंक्ति १८—*Read* सोत्थि *for* सोत्यि।

पृष्ठ ८७—

नीचे से पंक्ति १३—Read *cools* for *looks.*

पृष्ठ ८८ : श्लोक ६—

दिग्धाङ्गाः—उपवर्णितशरीराः, लिप्ताङ्गाः। माणिक्यानामाभरणानि, तेषां प्रभाणां व्यतिकरैः संकरैर् व्यतिषङ्गैश् चित्रीकृतानि शबलीकृतानि अच्छानि निर्मलानि अंशुकानि वासांसि येषां ते। दयिताभिः पूर्वं पीतानि पश्चादवशिष्टानि (अर्थात् उक्षितानि. *See p. 80 above* चोक्षित्वा)।

पृष्ठ ८६—

पंक्ति ६—*Read* अपनी *for* अपन। पंक्ति १३—*Read* भाभी *for* भाभा।

पृष्ठ ६० : श्लोक ११—

'व्यतिरेक'-अलंकार—

व्यतिरेको विशेषश्चेदुपमानोपमेययोः।
शैला इवोन्नताः सन्तः किन्तु प्रकृतिकोमलाः॥

पृष्ठ ६१—

नीचे से पंक्ति ६—*Read* then *for* t en.

पृष्ठ ६२—

पंक्ति ३—*Read* रसेन *for* रसे।

श्लोक १२—

कार्य-कारणयोर्भिन्नदेशत्वादत्र 'असंगतिर्' अलङ्कारः।

दासीए धीदे—धीदा and धीता are Prakrit forms of दुहितर्; *Cf.* Panjabi धी।

पृष्ठ ६४ : श्लोक १३—

मधु मधुकरः किन्त्वेतस्मिन् पिबन्न विभाव्यते—Unless जीमूतवाहन himself becomes a मधुकर and, kissing her lips, makes the lotus-figure complete. भङ्ग्यन्तरेणाधररसपानाभिलाषनिवेदनात् 'पर्यायोक्तम्'। कमलसादृश्यबोधनाद् 'उपमा' च। 'अनुप्रासो' ऽपि व्यक्तं दृश्यते।

पृष्ठ ६६ : श्लोक १५—

कृतं सकलेषु वियत आकाशस्य मार्गेषु यानं यैस्तैर्विमानैः। उद्वृत्तस्य शत्रोः क्षयाद् भयेन = भीत्या हेतुना विनमद् राजकं = राज्ञां समूहः, तत्र तादृशं ते स्वराज्यम्। हमने क्षय का अर्थ 'शत्रु का उत्पात' लिया है और विनमत् का अर्थ '(शत्रु के) अधीन' लिया है। किन्तु टीकाकार क्षय का अर्थ 'शत्रु का विनाश' करते हैं और 'विनमत्' का 'विनम्रतया त्वदधीनतां स्वीकुर्वत्' करते हैं। पर हमारा अर्थ अधिक युक्तिसंगत है। सिद्धम्—वशीकृतम् एव जानीहि। The '*no sooner than*

*this*' type of expression is called समुच्चयालंकार, as here :—

बहूनां युगपद्भावभाजां गुम्फः समुच्चयः।
नश्यन्ति पश्चात्पश्यन्ति त्रस्यन्ति च भवद्-द्विषः ॥ (कुवलयानन्द)

श्लोक १६—

रससेनावकृष्टो यो निस्त्रिंशस्तस्य दीधितय एव सटाः, तासां भरेण भासुरेण हरिणा-इव मया।

पृष्ठ ६८—

क्लेशान्—अविद्या,=अनित्यादिषु नित्यादिबुद्धिः, अस्मिता=अहंकारः, रागः, द्वेषः, अभिनिवेशः=आसक्तिः, इतीमान् योग-शास्त्र-प्रसिद्धान् पञ्च क्लेशान्। प्रत्यग्रेण कोपेनाक्षिप्तं चेतो यस्य सः।

श्लोक १८—

तपस्वी—शोच्यः ; 'मुनिशोच्यौ तपस्विनौ' इति विश्वः। निद्राया दलसंकोचस्य या मुद्रा अवस्था तस्या अवबन्धः गाढाश्लेषस्तस्य व्यतिकरं विकारं संबन्धं वा अपास्यन्=दूरीकुर्वन्। आशानां दिशां पूरस् तेजसा पूरणम् एकं कर्म तस्मिन् प्रवणैः रतैर् निज-करैः प्रीणितो ऽशेषो विश्वो येन सः। प्रसक्ताभिः उपस्थानसमये प्रस्तुताभिः, अविश्रान्ताभिर्वा स्तुतिभिर् मुखराणि मुखानि येषां तैः सिद्धैः। पद्मकोशात् पद्माख्य-निधेर् निद्रा दानं प्रत्यजागरूकता राजपुरुषाणामालस्यं वा मुद्रा राजचिह्नं च ताभ्याम् अवबन्धः प्रतिबन्धस्तस्य व्यतिकरं संबन्धम् अपास्यन् दूरीकुर्वन्, अर्थाद् याचकेभ्यः पद्म-निधेर्मुखमुद्घाटयन्।

सूर्ये उपकारिणो व्यवहार-समारोपत्वाद् अत्र 'समासोक्तिः'—

समासोक्तिः समैर्यत्र कार्य-लिङ्ग-विशेषणैः।
व्यवहारसमारोपः प्रस्तुते ऽन्यस्य वस्तुनः॥

The statement foreshadows Jimutavahana's impending self-sacrifice.

## चतुर्थ अङ्क

कथासार—मित्रावसु तथा जीमूतवाहन मलयवती को घर पर छोड़कर समुद्र की वेला देखने निकले हुए हैं। समुद्र तट पर दूर कहीं अस्थि-शिखर दीख पड़ते हैं। मित्रावसु जीमूतवाहन को बतलाता है कि किस प्रकार गरुड़ प्रतिदिन एक नाग को यहाँ आकर अपना भोजन बनाता है। इन्हीं नागों के भुक्त-शेष अस्थि-पञ्जरों के ये ढेर हैं। जीमूतवाहन, गरुड़ तथा वासुकि, दोनोंकी हृदय-हीनता पर खिन्न हो उठता है। इतनेमें एक द्वारपाल किसी कार्यवश मित्रावसु को घर बुला ले जाता है।

एक करुण क्रन्दन वातावरण की शान्ति को भङ्ग कर देता है। आज शंखचूड़ की बलि चढ़ेगी। उसकी वृद्धा माता उसके साथ रोती-चीखती आ रही है। जीमूत-वाहन आत्मोत्सर्ग से शंखचूड़ को गरुड़ से बचाने का प्रस्ताव करता है। परन्तु शंखचूड़ भी कुलाभिमानी है, वह इस प्रकार कुलकलंक बनकर जीना नहीं चाहता।

वध से पूर्व वह दक्षिण गोकर्ण को नमस्कार करने जाता है। इसी बीच में वैवाहिक लाल जोड़ा लेकर जीमूतवाहन को ढूँढ़ता-ढूँढ़ता कञ्चुकी वहीं आ पहुँचता है। जीमूतवाहन लाल जोड़ा लेकर कञ्चुकी को विदा कर देता है और स्वयं उसे पहनकर वध्यशिला पर चढ़ जाता है।

गरुड़ आकर उसे उठा ले जाता है।

पृष्ठ १००—

वस्त्रयुगलम्—लाल जोड़ा जो विवाह आदि मङ्गलोत्सवों पर उपहार-रूपेण भेंट किया जाता है।

श्लोक १—

अन्तःपुर-व्यवस्था=१. राजकीय अन्तःपुरों की व्यवस्था, २. राज्य की आन्तरिक अनुशासन की व्यवस्था। स्खलितानि=१. ठोकरें, २. अपराध। दण्ड-नीति=१. डण्डे का आश्रय लेना, २. अपराधी का दण्ड-विधान। अर्थश्लेषानुप्राणित 'उपमा' ऽलंकारः। *Cf. Sakuntala, 5. 3*—

आचार इत्यधिकृतेन मया गृहीतः
या वेत्रयष्ठिरवरोध-गृहेषु राज्ञः।
काले गते बहुतिथे मम सैव जाता
प्रस्थान-विक्लव-गतेर् अवलम्बनार्था॥

प्रतिपदुत्सवे—First night of the moon—and of the married couple.

पृष्ठ १०१—

नीचे से पंक्ति ४-६—*Read* 'something suitable for presenting to Malayavati and the son-in-law on the accasion of the new-moon festival tonight'.

पृष्ठ १०२ : श्लोक २—

पंक्ति ३—*Read* शुचिशिला and द्रुमाणामधः *for* शचिशिला and द्रमाणामधः।

शय्याशाद्वल.........*Cf.* भर्तृहरि, वैराग्यशतक—

मही रम्या शय्या विपुलमुपधानं भुजलता
वितानं चाकाशं व्यजनमनुकूलो ऽयमनिलः।

स्फुरद्दीपश्चन्द्रो विरतिवनितासङ्गमुदितः
सुखं शान्तः शेते मुनिरतनुभूतिर् नृप इव ॥

*श्लोक ३—*

उद्गर्जन्तः ये जल-कुञ्जरेन्द्रास्तेषां रभसेन ये आस्फलाः चीत्कारास्तैरनुबद्धो ऽत एवोद्धताः । प्रतिध्वानिनीः=प्रतिध्वनिपूर्णा °भुवः । प्रायः बाहुल्येन प्रेङ्खन्ति इतस्ततो भ्रममाणानि असंख्यानि शंखवलयानि यस्यां सा वेला ।

*श्लोक ४—*

कवलिता ग्रासीकृता ये लवङ्ग-पल्लवास् तेषां (करि-मकरैर् विसृष्टैर्) उद्गारैः सुरभि यत् पयस् तेन ।

प्रालेयाचलः=हिमालयः ।

*पृष्ठ १०३—*

पंक्ति ७—*Read* यों ही *for* यों ह ।

*पृष्ठ १०४—*

भुजङ्गमाननुदिनमाहारयति स्म—गरुड़ के नागभक्षण के मूल में कद्रु और विनता, कश्यप की दो पत्नियों का परस्पर ईर्ष्या-द्वेष संनिहित है । *See* बृहत्कथा-मञ्जरी, लम्बक ४—

कद्रूश्च विनता चेति कश्यपस्य प्रिये पुरा ।
बालधौ भास्कराश्वानां सितासित-विवादतः ॥
पणं दास्याय चक्राते प्रतिज्ञाकृतनिश्चये ।
कृष्णबालान् विधायाश्वान् कद्रूः पुत्रैर्भुजंगमैः ।
दास्यं विनाय विनतां व्याजाद् गरुडमातरम् ॥
तस्या निशम्य दास्यं तत् पीयूषाहरणावधिः ।
वैनतेयो वहन्नागान् मातुर्दास्यमवारयत् ॥
जवात् पीयूषमाहृत्य जित्वा शक्रं खगेश्वरः ।
प्रदाय काद्रवेयेभ्यो दासभावादमुच्यत ॥
धृतं पीयूषकलशं कुशेष्वभ्येत्य वासवः ।
जहार तत्क्षणार्द्रांश्च लिलिहुः पन्नगाः कुशान् ॥
तो द्विजिह्वतां प्राप्ताः खरदर्भावलेहनैः ।
विष्णोर्वरात् सुपर्णस्य भक्षतां पन्नगा ययुः ॥

पंक्ति १७—*Read* विहितव्यवस्थो *for* विहितव्यवस्था ।

पंक्ति २७—*Read* formerly *for* farmerly.

पृष्ठ १०५—

नीचे से पंक्ति २—Read *and they appear* for *and appear*.

पृष्ठ १०६—

अनवसाना = निरन्ता।

पंक्ति ११—*Read* उपसृत्य *for* उपसृप्य।

बहुप्रत्यवाये = बहुविघ्ने।

पृष्ठ १०८—

अदृष्टसूर्यसुकुमारम्—*Cf.* कथासरित्सागर, ९०. २२—

अथार्क-कर-संस्पर्शाद् अङ्गं दूयेत यत्तव।
कथं शक्ष्यति तत् सोढुं तार्क्ष्यभक्षणजां रुजम्॥

श्लोक ८—

क्रोडीकरोति—*Cf.* जातस्य हि ध्रुवो मृत्युः (गीता) and also भागवत—

मृत्युर् जन्मवतां वीर देहेन सह जायते।
अद्य वा ऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः॥

पृष्ठ ११०—

प्रसक्तः—Is in progress, is going on. इति...निष्ठुरं मन्त्र्यते —*i.e.* we are not to blame.

नीचे से पंक्ति २—*Read* then go *for* then I go.

पृष्ठ ११२—

हा मनोरथ शतलब्ध = हा दुःखशतसंप्राप्त (कथासरित् ९०.१२०)।

पृष्ठ ११२, ११४ : श्लोक ९ और ११—

In the original story Jimutavahana condemns both Vasuki and Garuda :—

शोच्यः स वासुकी राजा यः स्वहस्तेन विद्विषे।
उपहारीकरोति स्वाः प्रजाः क्लीबो दिने-दिने॥
धृतानन-सहस्रः सन् एकेनाप्याननेन सः।
मामादौ भुङ्क्ष्व तार्क्ष्येति भाषितुं नाशकत् कथम्॥
तार्क्ष्यो ऽपि काश्यपिर्वीरः कृष्णाधिष्ठानपावनः।
ईदृशं कुरुते पापम् अहो मोहस्य गाढता॥ (९०, १०७,१०८, ११०)

The whole atmosphere here is borrowed almost verbatim from सोमदेव.

पृष्ठ ११६ : श्लोक १२—

*Cf.*—अपि ग्रावारोदित्यपि दलति वज्रस्य हृदयम् (उत्तरराम०)।

श्लोक १३—

महतो ऽहेर् मस्तिष्कस्य विभेदान् मुक्तं यद्रक्तं तस्य च्छटया चर्चितश् चण्डश्चञ्चुर्यस्य स गरुत्मान्। सोमस्य आकृतिरिव सौम्यस्वभावा आकृतिर्यस्य स एष साधुः। or, सोमवत् स्वभावः शीलम् आकृतिः रूपं च यस्य तादृशः। *Cf.* कथासरित्सागर, ९०.११३—

शङ्खचूडस्ततो ऽवादीन् नैष तार्क्ष्यो ऽम्ब मा त्रसीः।
क्वायं चन्द्र इवाह्लादी क्व स तार्क्ष्यो भयंकरः॥

अत्र विषमालंकारः—

'विरूपयोः संघटना या च तद् विषमं मतम्।'

Mark the difference of language in the first half (in which it is ओजस्विनी) and the second half ( in which it is कोमला ) of the verse on account of the difference in the nature of the persons described. This sudden change from vigorous to soft style (पतत्प्रकर्षता) is not considerd to be a fault. As Visvanatha remarks :—

"गर्भितत्वं गुणः क्वापि पतत्प्रकर्षता तथा।"

पृष्ठ ११८ : श्लोक १४—

विनतात्मज=गरुड।

श्लोक १५—

Correct the number of this verse from 14 to 15 in the text.

विश्वामित्रः श्वमांसम्— महाभारत में एक कथा आती है कि एक बार अकाल पड़ा। महर्षि विश्वामित्र को भूख ने इतना सताया कि रात को चाण्डाल के घर से कुत्ते का मांस चुराकर खाने लगे। रँगे हाथ पकड़े गए, तब उन्होंने आपद्धर्म की दुहाई दी—

जीवितात्ययमापन्नो यो ऽन्नमत्ति यतस्ततः।
आकाशमिव पङ्केन न स पापेन लिप्यते॥
क्षुधार्त्तश्चात्तुमभ्यागाद् विश्वामित्रः श्वजाघनीम्।
चाण्डालहस्तादादाय धर्माधर्मविचक्षणः॥ मनु० १०. १०४,१०८॥

*Cf.* ऋगवेद ४.१८, which contains the original story of

गरुड (श्येन), his mother Aditi, Indra, madhu (=अमृत) and Vamadeva (=विश्वामित्र in आपद्धर्म ?), especially stanza 13—

अवर्त्या शुन आन्त्राणि पेचे न देवेषु विविदे मर्डितारम्।
अपश्यं जायाममहीयमानामधा मे श्येनो मध्वा जभार ॥

नाडीजङ्घ—महाभारत अनुशासन पर्व—एक निर्धन ब्राह्मण गौतम रोटी कमाने घर से बाहर निकला। मार्ग में उसकी वकराज नाडीजङ्घ से भेंट हुई। दयालु नाडीजङ्घ ने उसे अपने मित्र विरूपाक्ष के पास भेज दिया। विरूपाक्ष ने उसे धन-संपत्ति से लाद दिया। परन्तु वापसी पर उसके पास खाने को अन्न आदि खाद्य पदार्थ कुछ न रहा। वह विवश अपने उपकारी नाडीजङ्घ को ही मारकर खा गया।

स्वार्थ तथा परार्थ वृत्ति की दृष्टि से भर्तृहरि ने मनुष्य जाति को चार वर्गों में विभक्त किया है—

एते सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये।
तेऽमी मानवराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥ (नीतिशतकम्)

श्लोक १६—

जायन्ते च म्रियन्ते च......*Cf.* कथासरित्० ९०. १३९, १४०—

न त्वहं त्वच्छरीरेण रक्ष्यामि स्वशरीरकम्।
रत्नव्ययेन पाषाणं को हि रक्षितुम् अर्हति ॥
मादृशैस्तु जगत्पूर्णं स्वात्ममात्रानुकम्पिभिः।
अनुकम्प्यं जगद् येषां विरलास्ते भवादृशाः ॥

*Cf.* क्षेमेन्द्र (अवदानकल्पलता)—

भवन्ति नित्यं भवकानने ऽस्मिन् अस्मद्विधाः काशपलाशतुल्याः।
भवद्विधस्यामृतसोदरस्य न पारिजातस्य पुनः प्रसूतिः ॥
(जीमूतवाहनावदान, १६)

पृष्ठ १२०—

शङ्खपालकुलम्—one of the eight नागकुलs—

अनन्तं वासुकिं शेषं पद्मनाभं च कम्बलम्।
धृतराष्ट्रं शङ्खपालं तक्षकं कालियं तथा ॥

पंक्ति १२—*Read* वध्यचिह्नम् *for* वध्यचिह्नम्।

पृष्ठ १२२ : श्लोक १८—

चञ्चद्भिश् चञ्चुभिः (पूर्वम्) उद्धृताः (पश्चाद्) ये ऽर्धच्युताः पिशित-लवाः,

तेषां ग्रासार्थं संवृद्धो गर्धो येषां तैर् गृध्रैः । आरब्धः पक्ष-द्वितयस्य विधुतयो यैस्तादृशैः । बद्धः सान्द्रो ऽन्धकारो यत्र तस्मिन् अस्र-स्रोतसि । शिखी = अग्निः । शिखिशिखाश्रेण्यः = अग्निज्वालापंक्तयः । **शिवा रुवत्यो ऽग्निमुद्गिरन्तीति प्रसिद्धिः, अत एव ता उल्कामुखा इति व्यपदिश्यन्ते ।** But in our opinion the flames of fire do not issue from the mouths of jackals but from the firebrands which they pull out of the pyre in order to reach the burning corpse. अजस्रं स्रुता या बहला वसा तस्या वासेन विस्रे अस्रस्रोतसि । वास in the sense of 'bad smell' occurs in the compound 'मुखवास' = foul breath.

*श्लोक १९—*

**बीभत्सो रसः ।**

अहिना = १. नागरूपेण + आहारेण २. नागरूपेण हारेण । विनायके (१. वि-नायके = गरुडे, २. गणेशे) आहिता प्रीतिर्येन तत् । शशिनः (शेखरेन्दोः) रुचा धवलं (शिवस्य हस्ते धृतम्) अस्थिकपालम् (अस्थि-कपालम्, अस्थिक-पालम् = श्मशानम्) । श्मशानपक्षे —शशि-ज्योत्स्नेव धवलमस्थिक-पालम् । रौद्रम् = १. रुद्र-सम्बन्धि, २. भयानकम् । श्लेषानुप्राणिता पूर्णोपमा ।

*श्लोक २०—*

गतौ = योनौ । पश्चिमम् = अन्तिमम् । दक्षिणगोकर्ण — *See* भूमिका — 'बलिदान कथासरित्' *p. xx* (नांगे कनफटे नाथ जोगी) 'गोकर्णाख्यं शिवक्षेत्रं सांनिध्यं यत्र धूर्जटेः' (भागवत) । *Cf.* Kalidasa—

अथ रोधसि दक्षिणोदधेः श्रितगोकर्णनिकेतमीश्वरम् ॥ (रघु° ८.३३)

*पृष्ठ १२४—*

चलितो मलयाचलशिखरस्य शिलासंचयो येन स नभस्वान्वायुः ।

*पृष्ठ १२६ : श्लोक २२—*

संवर्तकाभ्रैः—संवर्तकालीनैः प्रलयकालीनैर् अभ्रैर् मेघैः । पिदधति = अपि-दधति = आच्छादयन्ति । पक्षतिः = पक्षमूलम् । दिग्द्विपेन्द्रैः *Cf.*—

ऐरावतः पुण्डरीको वामनः कुमुदो ऽञ्जनः ।
पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥

But दिङ्नाग more probably means a cyclone (*See our* मेघदूतम्, पूर्वमेघ *verse 14*, चन्द्रिका, *p.19*).

द्वादश आदित्यानां दीप्तिरिव दीप्तिर्यस्य स गरुत्मान् ।

श्लोक २४—

विस्रब्धम् = निःशङ्कं यथा स्यात्तथा ।

पृष्ठ १२८ : श्लोक २५—

The Eagle (गरुड) seems to be connected with all that the Purana associates with the tides and ebbs of the ocean, for instance, the sunrise, the moonrise, the Nagas, and the clouds—all of which are said to spring from the ocean.

हिमांशुः = चन्द्रः । पूषा = सूर्यः । गरुडस्याग्रजः = अरुणः, सूर्य-सारथिः ('सूर-सूतो ऽरुणो ऽनूरुः काश्यपिर्गरुडाग्रजः' इत्यमरः) । It depicts only a natural but daily phenomenon of the birds leaving their nests just after the day has dawned, so अरुण *i.e.* day-break is the अग्रज—harbinger of birds' chirping. प्रान्तेषु अवसज्जन्तो ये जलधर-पटलास्तैरतिमात्रम् आयतीभूतौ पक्षौ यस्य सः । वेलास्थितं महीध्रम् = वेलामहीध्रं मलयं प्राप्तो ऽस्मि ।

श्लोक २७—

अशनेर्दण्डाद् अपि चण्डतरया चञ्च्वा । मत्तो यद् भयं तेन दीर्यमाणाद् हृदयात् प्रस्यन्दिना असृजा रक्तेन ।

पृष्ठ १३० : श्लोक २८—

आमोदेन सुरभिणा आनन्दिता अलयो यया सा पुष्पवृष्टिः ।

नीचे से पंक्ति १—Read '*raised up by my*' for '*raised up my*'. नीचे से पंक्ति ५—Read *sweet* for *sweei*.

## पञ्चम अङ्क

कथासार—इधर जीमूतवाहन के वृद्ध माता-पिता और नवोढ़ा वधू मलयवती प्रतीक्षा में बैठे हैं । विश्वावसु के यहाँ से प्रतीहार जीमूतवाहन का समाचार लेने आता है, तो उनके मन आशंका से भर जाते हैं । इतने में आकाश से एक रक्तरञ्जित चूड़ामणि जीमूतकेतु के चरणों में आ गिरती है । सब के हृदय दहल जाते हैं । परन्तु संभव है यह किसी गरुड़ के भोजन-भूत नाग की चूडामणि हो ?

इसी आशंका के उत्तर रूप मानो शङ्खचूड सामने से रोता हुआ आता दिखाई देता है । जीमूत-परिवार नाना मानसिक घात-प्रतिघात में से होता हुआ जीमूत-वाहन के आत्मबलिदान की कथा शङ्खचूड से सुन लेता है । रुधिर-पंक्ति का अनुसरण

करते हुए सभी अग्नि हाथ में उठाए गरुड़ की टोह में मलय शिखर की ओर बढ़ते हैं।

गरुड़ मृत्यु-मुख में भी क्षत-विक्षत जीमूतवाहन के धैर्य पर चकित है, मुग्ध है। वह पश्चात्ताप की अग्नि में झुलस रहा है। शङ्खचूड, जीमूतकेतु, आदि के पहुँचते ही जीमूतवाहन के प्राण-पँखेरू उड़ जाते हैं। माँ बिलखती हैं 'हाय, कोई मेरे पुत्र को अमृत से जिला सकता!' अमृत का नाम सुनकर गरुड़ की स्मृति जाग उठती है और वह समुद्र में से अमृत लाने के लिये उड़ जाता है।

मलयवती भगवती गौरी को उपालम्भ देती है कि तू ने अच्छा वर दिया? गौरी तत्क्षण प्रकट होकर अपने कमण्डलु के जल से जीमूतवाहन को पुनरुज्जीवित कर देती है।

इसी समय आकाश से निर्मेघ वृष्टि होती है। नागलोक में पुनर्जीवन आ जाता है।

पृष्ठ १३२ : श्लोक १—

*Read* दृष्ट-बह्वपाय- *for* दृष्ट-बह्वापाय। बहवो ये अपायस्तैः प्रतिभयस्य भयावहस्य कान्तारस्य मध्यस्थे सति स्निग्धे।

उटजाङ्गणे = कुटिप्राङ्गणे।

श्लोक २—

भङ्गा विद्यन्ते ऽस्येति भङ्गवत्, ते भङ्गवती क्षौमे दुकूले। मलयवती = १. जीमूतवाहनस्य पत्नी, २. मलयाचल संबन्धिनी वेला च। अस्मत्प्राणयात्रार्थम् = अस्माकं प्राणयात्रोपयोगि-साधनाहरणाय।

पष्ठ १३५—

पंक्ति ५—*Read* मुझे *for* मुझ। नीचे से पंक्ति १—*read* lord *for* ord.

पृष्ठ १३६—

सहस्रदीधितिः = सूर्यः। वामाक्षिस्फुरणेन पुत्रस्यानिष्टं संभाव्यते, किन्तु भुवनैकचक्षुषः स्फुरणेन तदुपशमनम्। यतः सूर्यदर्शनेनापशकुनदोषः प्रशाम्यतीति शास्त्रविदां वचनम् —

भूरिदुःखप्रदं नित्यं द्रुतमादित्य-दर्शनात्।
वामाङ्गस्फुरणोद्भूतं दुर्निमित्तं प्रशाम्यति॥

मा विक्लवो भूः—No augment in भूः, *vide* Panini 'न माङ्योगे'।

नीचे से पंक्ति ८—*Read* Jimutavahana *for* Jimutavaha.

नीचे से पंक्ति ६—Read *throbbing* for *thrnaobbing*.

पृष्ठ १३८—

सोपपत्तिकम्=युक्तियुक्तम् ।

श्लोक ८—

*Read* कीर्तिर् एका ।

पृष्ठ १४० : श्लोक ६—

उत्पीड-पृथ्वीम्=उत्पीडेन शोणितप्रवाहेण पृथ्वीं स्थूलां रक्तधाराम् । आपातेन पूर्वं शीर्णां पश्चात् प्रसृत-तनु-कणाम् । स्त्यान-रूपाम्=गाढ-प्रायाम् । मुषितोऽस्मि वञ्चितो ऽस्मि ।

आकृतिः—यौवनावस्था ।

पृष्ठ १४१—

पंक्ति ६—*Read* शिलाओं और घने वृक्षों ।

पृष्ठ १४२—

परहितव्यसनी=परेषां हिते व्यसनमासक्तिर् यस्य सः । व्यसन-शब्दाद् 'अत इनिठनौ' ।

पंक्ति ६—श्लोक का अङ्क १२ से १० कर लो । पंक्ति १४—*Read* देवी *for* देवि ।

पृष्ठ १४४—

पंक्ति ३—*Read* प्रत्युपकृतं *for* प्रत्यपकृतं ।

श्लोक १२—

But in the original story the crown (चूडामणि) falls at the feet of Malayavati. विनयक्रमः=विनयस्य वृत्तिः ।

श्लोक १३—

विदूरं विनतं यद् आननं तेन नम्रो मौलिर्यस्य तस्य तव । *Read* नम्र-मौलेः *for* न-म्रमौलेः । मासृण्यगुण-विदारणक्रिययोर्विरोधाद् अत्र 'विरोधाभासो' ऽलंकारः ।

पृष्ठ १४६—

आहिताग्निः—विधिवद् अग्निदेवतां साक्षीकृत्योपात्तो व्रत आश्रमो वा येन सः । साग्निकस्य हि दाहसंस्कारविधिर्मनुना प्रतिपादितः—

आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः ।<br>
अनाहिताग्निरेकेन लौकिकेनापरो जनः ॥

अग्निहोत्रशरणात्—यज्ञ-शालायाः । उत्सन्नम्=नष्टम् । विचित्राणिविधेर्विलसितानि—*Cf.* माघ—

हतविधिलसितानां को हि चित्रो विपाकः ! (शिशु° ११.६४)

पृष्ठ १४७—

नीचे से पंक्ति २—*Read* grace.

पृष्ठ १४८ : श्लोक १४—

द्रोणीरिव = अनेकशो घर्षणेन गर्तरचनया द्रोणी-तुल्याः, *Cf.* दोना, डूना। मज्जन्तो प्रविशन्तो ये वज्र इव कठोरा घोराश्च नखरास् तेषां प्रान्तैर् अवगाढा अन्तरित्य दृढं धृता ऽवनिर्येन स पन्नगरिपुः नागशत्रुः, गरुडः।

श्लोक १५—

*Cf.* कथासरित्सागर, ६०.१६४-१६५—

अहो ऽपूर्वः कोप्येष भक्ष्यमाणो ऽपि यो मया।<br>
प्रहृष्यति महासत्त्वो न तु प्राणैर्वियुज्यते ॥<br>
बिभर्ति लुप्तशेषे च गात्रे रोमाञ्चकञ्चुकम्।<br>
किं चोपकारिणीवास्य मयि दृष्टिः प्रसीदति ॥

पृष्ठ १५० : श्लोक १६—

सिरामुखैः—नाडीनां धमनीनां वा कृतैर्मुखैः।

श्लोक १७—

अर्वाजितम् = बलाद् गृहीतम्, विजितम्।

पृष्ठ १५२ : श्लोक १८—

तीव्रो यो विषाग्निस्तस्य धूमस्य पटलैर्व्याजिह्मो मन्दीकृतो रत्नत्विट् शिरोमणिज्योतिर् यासां ताः। दुःसहेन शोकेन शूत्कृता ये मरुतस्तैः स्फीताः आयताः फणाः। प्राग्भारदेशेषु = उन्नतदेशेषु। 'लोकालोकश् चक्रवालो लोकान्ताद्रिः पराचलः' इति वैजयन्ती। 'सप्तद्वीपवत्या भूमेः प्राकारभूतो गिरिर्लोकालोकः' इति महेश्वरः।

Whereas from Kalidasa's description of it in रघुवंश—'प्रकाशश्चाप्रकाशश्च लोकालोक इवाचलः' it would seem to be the mountain of sunrise and sunset, or the polar *aurora borealis* and *aurora australis*. But we think लोकालोक means simply लोकलोकान्तर.

पृष्ठ १५४—

पंक्ति १६—*Read* पितरौ *for* पितरा।

पृष्ठ १५५—

नीचे से पंक्ति २—*Read* these tears *for* hese ttears.

पृष्ठ १५६ : श्लोक २२—

त्रियाणां लोकानां समाहारस् त्रिलोकी तस्या ग्रसन-रसे चलद्भिः कालस्य जिह्वाग्र-तुल्यैर् ज्वालाभङ्गैः। कवलीकर्तुम् ग्रासीकर्तुम्। उत्पाते उत्पतनसमये य उद्भूतो वातप्रसरस्तेन (प्रलयवातेभ्यो ऽपि) पटुतरैर् अतिशयेन प्रचण्डैः पक्षवातैः। कल्पावसानस्य कल्पान्तस्य यत् ज्वलनम् अग्निस् तद्-इव भयकरे वाडवाग्नौ। गरुडेन पर्युपास्यमानः in ध्वनि of 'गुरुरेष यथा मम' Act. IV, *verse* 29.

नीचे से पंक्ति ५—Read *the* for *tho.*

पृष्ठ १५७—

पंक्ति ३—*Read* व्याकुल *for* श्याकुल।

पृष्ठ १५८—

विजृम्भितम्—फलम्, परिणामः, विवर्तः। *Cf.* पंजाबी, 'पवाडा' (प्रवारः ?)।

पृष्ठ १६०—

अतिदुष्करकारिणी—अत्यन्तं हृदयहीना कठोरहृदया वा।

पृष्ठ १६२ : श्लोक २५ —

दिशन्=inspiring. आत्तम्=आ+√दा+क्त=अर्जितम्। दुर्गाधस्य अगाधस्य अपारवारेः समुद्रस्येव ह्रदस्य सरसो ऽन्तः।

पृष्ठ १६४ : श्लोक २८—

°निभान्=°तुल्यान्। केशहस्तान्=केशपाशान्। समाधानम्=चित्तस्य एकाग्रता, मतिः, प्रतिज्ञा। दृढं समाधानं यस्य सः।

पृष्ठ १७० : श्लोक ३२—

*Read* पक्षोत्क्षिप्ताम्बुनाथ for पक्षोत्क्षिप्तान्बुनाथः।

But Garuda is Garuda after all! नेत्रयोर् अर्चिर्भिर्यः प्लोषो दाहस् तस्य मूर्च्छया अतिशयेन विधुरा विकला विनिपतन्तः सानला द्वादशार्का येन सो ऽहम्।

पृष्ठ १७२—

भगवति गौरि, त्वया ऽऽज्ञप्तम्=Goddess Gauri, thou hadst blest me! अमोघदर्शना=अविफल-दर्शना। अक्षतशरीरः=पूर्णशरीरः।

पृष्ठ १७४ : श्लोक ३५—

प्रणिपतितजनस्य=भक्तजनस्य आर्त्ति-हारिणि गौरि। शरण्या=शरणे साध्वि।

श्लोक ३७—

हंसानाम् अंसैः पक्षमूलैर् आहतं यद् हेमपङ्कजानां रजस् तस्य संपर्कपङ्काद्

उज्झितैर् मुक्तैः so issuing from the very heart of Gauri herself and accordingly superior to the sacred waters of मानसरोवर; but the expression मानसादपि परम् is grammatically unintelligible.

पृष्ठ १७५—

नीचे से पंक्ति ११, १२—Read *'licking the earth with avidity with the tips of their tongues to taste the Water of Life.'*

पृष्ठ १७६ : श्लोक ३८—

मलयवति-अपि श्यामो हरिः, but मलयवती is not a jewel (रत्न) of Jimutavahana's insignia of sovereignty as the commentators seem to think. They seem to depend on the following tradition :

भार्या पुरोहितश्चैव सेनानी रथकृच्च यः ।
पत्त्यश्वौ कलभश्चेति प्राणिनः सप्त कीर्तिताः ॥

अथवा, ललितविस्तरे ऽपि यथा—चक्ररत्नं हस्तिरत्नम् अश्व-रत्नं स्त्रीरत्नं मणिरत्नं गृहपतिरत्नं परिणायकरत्नम्—इति सप्तरत्नानि भवन्ति । किन्त्वत्र प्रथमतश्चत्वार्येव वर्णितानि ।

श्लोक ४०—

हृष्टानां शिखण्डिनां मयूराणां ताण्डवं बिभ्रति ये ते ऽम्बुदाः । प्रतिरूढम् = जलसेकेन अतिशयेन अङ्कुरितं, सन्ततम् अविरलं व्याप्तं वा हरित्सस्यमेवोत्तरीयं यस्यास्तां क्षितिम् । धनं यथा स्यात्तथा = गाढस्नेहेन बद्धा बान्धवानां सुहृदां च गोष्ठ्यः प्रमोदाश्च याभिस्ताः प्रजाः ।

*Read* मोदन्तां *for* मादन्तां in the fourth quarter.

पृष्ठ १७८ : श्लोक ४१—

दोषाः प्रयान्तु नाशम्—

कामः क्रोधो मदो मानः पैशुन्यं परिवादिता ।
लोभाहङ्कारनैष्ठुर्यदम्भा दोषा दश स्मृताः ॥

इति शम्